राजीवगान्धीपरिसरग्रन्थमाला - १

श्री कुणिगल् रामशास्त्रिविरचितसत्प्रतिपक्षशतकोटिग्रन्थस्य व्याख्या

# विवेचनी

व्याख्याता

डा. नवीनहोळ्ळः




राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

राजीवगान्धीपरिसरः

शृङ्गेरी - ५७७ १३९

२००६

राजीवगान्धीपरिसरग्रन्थमाला - १

श्री कुणिगल् रामशास्त्रिविरचितसत्प्रतिपक्षशतकोटिग्रन्थस्य व्याख्या

# विवेचनी

व्याख्याता

डा. नवीनहोळ्ळः




राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

राजीवगान्धीपरिसरः

शृङ्गेरी - ५७७ १३९

२००६

Title : VIVECHANI of Sarpratipaksha

Commentary by : Dr. Naveen Holla



Published By :

*Principal*

**RASHTRIYA SANSKRIT SANSTHAN**

**(Deemed University Under MHRD, Govt. of India)**

**Rajiv Gandhi Campus,**

**SRINGERI - 577 139** (Karnataka)

Edition : First

Year : 2006

Copies : 500

Price : 150/-

Type Setting : Chirantan Graphics, Sringeri

Printed at : Yashaswi Offset Printers, Koppa

# समर्पणम्



श्रीमत्परमहंसेत्यादिसमस्तबिरुदावलीविराजमानाः शृङ्गगिरिशारदापीठाधीश्वराः
सकलशास्त्रनदीष्णाः जगद्गुरुतल्लजाः परमपूज्याः

श्री भारतीतीर्थमहास्वामिनः

अनुपमशिष्यवात्सल्येन मामुद्बोध्य समग्रं नव्यन्यायशास्त्रं यथासम्प्रदाय-मध्यापयन्तः, तत्र मम रुचिमुत्पाद्य, दृढां व्युत्पत्तिञ्चाधाय एतादृशोद्ग्रन्थ-विवेचनासामर्थ्यमन्वग्रहीषुः। एतेषां निरवग्रहानुग्रहेण जगन्मातृश्रीशारदाम्बायाः असीमानुकम्पयानुगृहीतेन समुद्भूय विकसितमेतत् ग्रन्थकुसुमं साष्टाङ्गप्रणति-ततीभिः सनाथीकृत्य सभक्तिश्रद्धमेतेषां गुरुवराणां चरणपादुकयोः समर्पयामि॥

इति
गुरुचरणान्तेवासी
वि. नवीनहोळ्ळः



**श्री श्री जगद्गुरु शङ्कराचार्य महासंस्थानम्, दक्षिणाम्नाय श्री शारदापीठम्, शृङ्गेरी**

## दक्षिणाम्नायशृङ्गेरीशारदापीठाधीश्वराणां जगद्गुरु शङ्कराचार्याणां
## अनन्तश्रीविभूषितानां श्रीश्रीभारतीतीर्थमहास्वामिनां

### ॥ आशीःपत्रम् ॥

इह खलु दार्शनिकास्समेऽपि विषयविवेचने स्वां प्रतिभां प्रदर्शयन्तो दृश्यन्ते। अत एव तदीया शैली प्रसादं गाम्भीर्यं चावहति। तत्रापि नव्यनैयायिकाः परिष्काराध्वनि सुदूरं सञ्चरन्तीति सर्वत्र प्रसिद्धिः। तत्र च प्रमाणं क्रोडपत्राण्येव। कालीशङ्कर-चन्द्रनारायण-गोलोकनाथ प्रभृतयः विपश्चितः क्रोडपत्रकारा इति पप्रथिरे। परन्तु समेपीमे औत्तरा एव। दाक्षिणात्येषु तादृशा न सन्तीति काचिदपख्यातिरासीत्। तां परिमार्ष्टुं प्रादुरभूवन् द्विशतसमानां प्राक् महीसूरपुर्यां श्रीमन्तः कुणिगल् रामशास्त्रिणः। पण्डितसार्वभौमैस्तैः सत्प्रतिपक्षलक्षणमाश्रित्य विरचितं शतकोटिनामकं क्रोडपत्रं विद्वल्लोके अत्युन्नतं स्थानमवाप। तदुत्तरं दाक्षिणात्या विद्वांसः क्रोडपत्ररचनामुपचक्रमिरे।

सोऽयं शतकोटिग्रन्थः नव्यन्याये सुदृढां व्युत्पत्तिं प्रेप्सुभिस्सबहुमानमाद्रियते। तमवगन्तुं कैश्चित् सरला टिप्पण्यपि व्यरचि।

अधुना अस्मदन्तेवासी नवीनहोळ्ळः शतकोटिग्रन्थस्य विवेचनीनाम्नीमभिनवां व्याख्यां व्यरचयदिति मोमुद्यते नश्चेतः। व्याख्यायामस्यां व्याख्यातुस्सूक्ष्मेक्षिका स्फुटतरं परिस्फुरति। व्याख्येयं तर्करसिकानवश्यं रञ्जयिष्यतीति प्रतीमः। आशास्महे चायं व्याख्याता श्रेयःपरम्पराभिस्समेधतामिति।

शृङ्गगिरिः
व्ययमार्गशीर्षकृष्णद्वितीया
सौम्यवासरः ६-१२-२००६

इति नारायणस्मरणम्



ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यवद्ध्ररूपसत्प्रतिपक्षे एव लक्षणसमन्वयो भवति । ह्रदो वह्निमान् इत्यनुमितिं प्रति वह्न्यभावव्याप्यवान् ह्रद इति सत्प्रतिपक्षनिश्चयः तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकः । अतः वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयितायां प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वं वर्तते इति सत्यन्तदलं वर्तते । एवं ह्रदो वह्निमानि त्यनुमितिं प्रति ह्रदो वह्न्यभाववा निति बाधनिश्चयः तदभाववत्तानिश्चयमुद्रया प्रतिबन्धकः । तादृशबाधनिश्चयं प्रति च वह्न्यभावव्याप्यवान् ह्रद इति परामर्शः जनकः । अतो विशेष्यदलमपि तस्यां विषयितायां वर्तते । अतः यद्रूपपदेन वह्न्यभावव्याप्यवद्ध्रदत्वस्योपादाने तद्रूपावच्छिन्नत्वमादाय वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे लक्षणसमन्वयो भवति । सत्यन्तदलानुपादाने वह्न्यभावव्याप्यव्याप्यवद्ध्रदे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः । अतस्तद्वारणाय सत्यन्तदलमुपादीयते । विशेष्यदलानुपादाने वह्न्यभाववद्ध्रदे बाधेऽतिव्याप्तिः अतस्तद्वारणाय विशेष्यदलमुपादीयते ।

अस्य सत्प्रतिपक्षविभाजकलक्षणस्य वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे अतिव्याप्तिः । तद्विषयकनिश्चयस्य ह्रदे वह्न्यभावावगाहित्वेनानुमितिं प्रति प्रतिबन्धककत्वात्, अनुमितिप्रतिबन्धिकां ह्रदो वह्न्यभावव्याप्यवानित्यनुमितिं प्रति जनकत्वाच्च उत्कलणाक्रान्तत्वात् । अनेनातिव्याप्तिदोषप्रदर्शनेन सत्प्रतिपक्षशतकोटिग्रन्थः आरभ्यते । एतादृशातिव्याप्तिप्रदर्शनमेव प्रथमकोटिः । अनन्तरकोटिभिः तद्दोषवारणोपायः पुनराशङ्का इत्येवं रूपेण निरूपितम् । विद्वतल्लजैः श्री कुणिगल् रामशास्त्रिमहोदयैः अयं सत्प्रतिपक्षशतकोटिग्रन्थः विरचितः । अस्मिन् ग्रन्थे नवतिः कोटयः वर्तन्ते । न्यायशास्त्राध्येतृणामयं ग्रन्थः अतीव व्युत्पादकः । ग्रन्थस्यास्योपरि बहूनि व्याख्यानानि दरीदृश्यन्ते । चतुश्शास्त्रपारङ्गतैः महामहोपाध्याय श्री गोडा सुब्रह्मण्यशास्त्रिमहाभागैरपि सत्प्रतिपक्षशतकोटिटिप्पणीनाम्ना एका महती सुबोधिनी व्याख्या विरचिता, यस्यां तत्तत्कोटिसमन्वयः अनुगमपद्धतिश्च दरीदृश्यते । प्रायशः सर्वासामपि कोटीनां विषयेऽनुगमः तैः महाभागैः विरचितः ।

शृङ्गेरीशारदापीठाधीश्वराणां सर्वशास्त्रनिधीनां पुंभावशारदानां श्रीचरणानां श्रीभारतीतीर्थमहास्वामिनामन्तेवासी समधीतन्यायशास्त्रः श्रीचरणश्लाघितविद्वन्मणिः शृङ्गेरीस्थराजीवगान्धीपरिसरे राष्ट्रियसंस्कृतसंस्थाने न्यायविभागे न्यायशास्त्रप्रवचनकर्मणि अभिरतः श्रीमान् नवीनहोळ्ळवर्यः सत्प्रतिपक्षशतकोटि–

ग्रन्थस्यास्योपरि विवेचनीनाम्नीं व्याख्यां व्यरचयदिति महान् प्रमोदो जायते । अत्यन्तं गभीरा इयं व्याख्या न्यायशास्त्रक्रोडपत्राध्येतृणां महते उपकाराय कल्पते इत्यत्र न कोऽपि संशयलेशः । तत्तत्कोटीनां विषये अनुगमपद्धतिः प्रदर्शिता । ग्रन्थप्रणेतृणां हृदयाविष्करणे च यत्नः कृतः नवीनहोळ्ळमहाभागेन । अष्टमकोटौ यत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वनिवेशकल्पे बाधातिव्याप्तिवारकतया निविष्टस्य विशेष्यदलस्य वैयर्थ्यमाशङ्क्य प्रयोजनं सुष्ठु निरूपितम् । इत्थं विवेचनीव्याख्येयं शतकोटिप्रणेतृणां तात्पर्योपवर्णनेन तदध्येतृणां महते उपकाराय कल्पते इति विश्वसिमि । तत्तकोटिसमन्वयमपि यद्यकरिष्यत्, तर्हि इतोऽप्युपकारः अध्येतृणामभविष्यत् । आगामिमुद्रणे वा तत्तत्कोटिसमन्वयसमवायः विधेय इति भावयामि । एतादृशजटिलक्रोडपत्रव्याख्यातारं श्रीनवीनहोळ्ळमहाभागं मनसाभिनन्दामि ।

भगवती श्रीशारदा इतोऽप्यधिकतरं श्री होळ्ळमहोदयानां हृदये सन्निधत्तामिति जगद्गुरूणां श्रीचरणानां कृपादृष्टिरेतेषु इतोऽप्यधिकतमं विराजतामिति च तौ सम्प्रार्थ्य विरमामि ।

इत्थं

(वेम्पटि कुटुम्बशास्त्री)



प्रो.वेम्पटि कुटुम्ब शास्त्री
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
(मानवसंसाधन विकास मन्त्रालय,भारत सरकार के अधीन)

**Prof. V. Kutumba Sastry**
*Vice-Chancellor*
RASHTRIYA SANSKRIT SANSTHAN
Deemed University
(Under MHRD, Govt. of India)

# शुभाभिनन्दनम्

न्यायशास्त्रे उत्तरवादेषु सत्प्रतिपक्षग्रन्थः पठनपाठनादिषु प्रधानग्रन्थतया प्रथितो विराजते। यत्र वादिप्रतिवादिभ्यां शब्दो नित्यः श्रावणत्वादिति शब्दोऽनित्यः कार्यत्वादिति च विरुद्धानुमानद्वयं प्रयुक्तं, तत्र नित्यत्वव्याप्यश्रावणत्ववान् शब्दः, अनित्यत्वव्याप्यकार्यत्ववान् शब्दः इति विरोधिपरामर्शद्वयकाले नैकाऽप्यनुमितिः जायते परस्परप्रतिबन्धात् । अत एव दीधितिकारैः रघुनाथशिरोमणिभिः साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम् इति विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वमिति च द्वे सत्प्रतिपक्षव्यावहारिकलक्षणे प्रोक्ते ।

दीधितिकारैरेव विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति विशिष्टपक्षसाध्यग्रहाऽविरोधि प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम् इति सत्प्रतिपक्षविभाजकलक्षणमुक्तम् । प्रकृतपक्षतावच्छेदकावच्छिन्नो प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापक प्रतिबद्धतानिरूपित-प्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्य-ग्रहप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपित-जनकतावच्छेदिका यादृशविशिष्टनिरूपितविषयिता तादृशत्वम् इति गदाधरभट्टाचार्यैः विवृतम् ।

ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यवद्ध्ररूपसत्प्रतिपक्षे एवं लक्षणसमन्वयो भवति। ह्रदो वह्निमान् इत्यनुमितिं प्रति वह्न्यभावव्याप्यवान् ह्रद इति सत्प्रतिपक्षनिश्चयः तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकः। अतः वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयितायां प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वं वर्तत, इति सत्यन्तदलं वर्तते। एवं ह्रदो वह्निमानि त्यनुमितिं प्रति ह्रदो वह्न्यभाववा निति बाधनिश्चयः तदभाववत्तानिश्चयमुद्रया प्रतिबन्धकः। तादृशबाधनिश्चयं प्रति च वह्न्यभावव्याप्यवान् ह्रद इति परामर्शः जनकः। अतो विशेष्यदलमपि तस्यां विषयितायां वर्तते। अतः यद्रूपपदेन वह्न्यभावव्याप्यवद्ध्रदत्वस्योपादाने तद्रूपावच्छिन्नत्वमादाय वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे लक्षणसमन्वयो भवति। सत्यन्तदलानुपादाने वह्न्यभावव्याप्यव्याप्यवद्ध्रदे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः। अतस्तद्वारणाय सत्यन्तदलमुपादीयते। विशेष्यदलानुपादाने वह्न्यभाववद्ध्रदे बाधेऽतिव्याप्तिः। अतस्तद्वारणाय विशेष्यदलमुपादीयते।

अस्य सत्प्रतिपक्षविभाजकलक्षणस्य वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे अतिव्याप्तिः। तद्विषयकनिश्चयस्य ह्रदे वह्न्यभावावगाहित्वेनानुमितिं प्रति प्रतिबन्धककत्वात्, अनुमितिप्रतिबन्धिकां ह्रदो वह्न्यभावव्याप्यवानित्यनुमितिं प्रति जनकत्वाच्च उक्तलणाक्रान्तत्वात्। अनेनातिव्याप्तिदोषप्रदर्शनेन सत्प्रतिपक्षशतकोटिग्रन्थः आरभ्यते। एतादृशातिव्याप्तिप्रदर्शनमेव प्रथमकोटिः। अनन्तरकोटिभिः तद्दोषवारणोपायः पुनराशङ्का इत्येवं रूपेण निरूपितम्। विद्वतल्लजैः श्री कुणिगल् रामशास्त्रिमहोदयैः अयं सत्प्रतिपक्षशतकोटिग्रन्थः विरचितः। अस्मिन् ग्रन्थे नवतिः कोटयः वर्तन्ते। न्यायशास्त्राध्येतॄणामयं ग्रन्थः अतीव व्युत्पादकः। ग्रन्थस्यास्योपरि बहूनि व्याख्यानानि दरीदृश्यन्ते। चतुश्शास्त्रपारङ्गतैः महामहोपाध्याय श्री गोडा सुब्रह्मण्यशास्त्रिमहाभागैरपि सत्प्रतिपक्षशतकोटिटिप्पणीनाम्ना एका महती सुबोधिनी व्याख्या विरचिता, यस्यां तत्तत्कोटिसमन्वयः अनुगमपद्धतिश्च दरीदृश्यते। प्रायशः सर्वासामपि कोटीनां विषयेऽनुगमः तैः महाभागैः विरचितः।

शृङ्गेरीशारदापीठाधीश्वराणां सर्वशास्त्रनिधीनां पुंभावशारदानां श्रीचरणानां श्रीभारतीतीर्थमहास्वामिनामन्तेवासी समधीतन्यायशास्त्रः श्रीचरणश्लाघितविद्वन्मणिः शृङ्गेरीस्थराजीवगान्धीपरिसरे राष्ट्रियसंस्कृतसंस्थाने न्यायविभागे न्यायशास्त्रप्रवचनकर्मणि अभिरतः श्रीमान् नवीनहोळ्ळवर्यः सत्प्रतिपक्षशतकोटि–

ग्रन्थस्यास्योपरि विवेचनीनाम्नीं व्याख्यां व्यरचयदिति महान् प्रमोदो जायते । अत्यन्तं गभीरा इयं व्याख्या न्यायशास्त्रक्रोडपत्राध्येतॄणां महते उपकाराय कल्पते इत्यत्र न कोऽपि संशयलेशः । तत्तत्कोटीनां विषये अनुगमपद्धतिः प्रदर्शिता । ग्रन्थप्रणेतॄणां हृदयाविष्करणे च यत्नः कृतः नवीनहोळ्ळमहाभागेन । अष्टमकोटौ यत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वनिवेशकल्पे बाधातिव्याप्तिवारकतया निविष्टस्य विशेष्यदलस्य वैयर्थ्यमाशङ्क्य प्रयोजनं सुष्ठु निरूपितम् । इत्थं विवेचनीव्याख्येयं शतकोटिप्रणेतॄणां तात्पर्योपवर्णनेन तदध्येतॄणां महते उपकाराय कल्पते इति विश्वसिमि । तत्तकोटिसमन्वयमपि यद्यकरिष्यत्, तर्हि इतोऽप्युपकारः अध्येतॄणामभविष्यत् । आगामिमुद्रणे वा तत्तत्कोटिसमन्वयसमवायः विधेय इति भावयामि । एतादृशजटिलक्रोडपत्रव्याख्यातारं श्रीनवीनहोळ्ळमहाभागं मनसाभिनन्दामि ।

भगवती श्रीशारदा इतोऽप्यधिकतरं श्री होळ्ळमहोदयानां हृदये सन्निधत्तामिति जगद्गुरूणां श्रीचरणानां कृपादृष्टिरेतेषु इतोऽप्यधिकतमं विराजतामिति च तौ सम्प्रार्थ्य विरमामि ।

इत्थं

(वेम्पटि कुटुम्बशास्त्री)



प्रो.रामानुजदेवनाथः
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
राजीवगान्धीपरिसरः
शृङ्गेरी - ५७७ १३९ (कर्णाटकम्)

Prof. Ramanuja DEVANATHAN
Principal
RASHTRIYA SANSKRIT SANSTHAN
Deemed University
Rajiv Gandhi Campus,
SRINGERI - 577 139 (Karnataka)

# आमुखम्

**योऽनूचानः स नो महान्** इति श्रुतिघोषं ध्येयमन्त्रत्वेन परिदधद् राष्ट्रियसंस्कृतसंस्थानं प्राचीनज्ञाननिधीनां शास्त्राणां संरक्षणे, संवर्धने, संस्कृतभाषायाः प्रचारणे, शास्त्र-विज्ञानयोः समन्वयने च तत्परं सन्ततमभिनवकर्मण्यभिरतं स्वोद्देश्यन्निर्वर्तयतीति संविदितमेव विदुषाम्। संस्थानस्य मुख्यकार्यालयेन विविधा अपूर्वा अमुद्रिता मुद्रिताश्चानुपलभ्यमाना ग्रन्थाः प्राकाश्यं नीयन्ते। तत्र च शास्त्रग्रन्था, अनुवादग्रन्थाः, कथासाहित्यं, विज्ञानविषयग्रन्था इति बह्वो ग्रन्थाः प्रकाशिता विद्वद्भिः, संस्कृतलोकेन च समाद्रियन्ते।

एवमेव संस्थानस्य विविधपरिसरैरप्यनुत्तमग्रन्था विविधशास्त्रीयाः प्रकाश्यन्ते। तदद्य शृङ्गेरीस्थ-राजीवगान्धीपरिसरेणेदम्प्रथमतयैषमः **सत्प्रतिपक्षशतकोटिग्रन्थो विवेचनी** इत्याख्यया व्याख्यया सह प्रकाश्यते ।

किञ्चिदिदम्प्रकृतमत्र। हेत्वाभासस्य प्रकारा बहुधा, ते च भारतीयदर्शनवाङ्मये नवभिर्नामभिर्व्यवह्रियमाणा दृश्यन्ते। यथा - विरुद्ध-असिद्ध-सन्दिग्ध-सव्यभिचार-प्रकरणसम-साध्यसम-कालातीत-अनध्यवसित-बाधा इति। सव्यभिचारोऽनैकान्तिकः, सत्प्रतिपक्षापराभिधः प्रकरणसमः। स चोपस्थाप्यते निश्चितनिष्कर्षाय, परन्तु स हेतुर्निश्चितनिष्कर्षे संशयं परमुत्पादयति। सत्प्रतिपक्षश्च भासर्वज्ञोद्द्योतकरगङ्गेशैरभ्यपागम्यत, न परं प्रशस्तपाद-दिङ्नाग-धर्मकीर्तिभिः। स्फुटं गङ्गेश एव हेत्वाभासं पर्यभाषत - तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्, यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वम्, ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं वेति। यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम इति गौतमः। यो निर्णयार्थमुपस्थापितोऽपि सन्देहास्पदविरुद्धकोटिकसम्भावनाः प्रस्तौति स सत्प्रतिपक्षः। अर्थात् प्रकरणसमो नाम यत्र वादी प्रतिवादी च सामान्यतोऽनिश्चयस्थितौ भवतो, न वर्तते तादृगाधारो येन निष्कर्षः स्यात्। यदैव निश्चिताधारस्तदा सद्धेतुः स्यात्तदभावे हेत्वाभास एव इति सत्प्रतिपक्षस्य हेत्वाभासता।

कैश्चित् प्रकरणसमः साध्यसमाद्भिन्नो न मन्यते। परन्तु उद्द्योतकरस्तु स्पष्टयतीत्थं- प्रकरणसमो निश्चितप्रकारसन्देहं जनयति, साध्यसमस्तावत् तादृक् साध्यसमानः साम्प्रतिकसिद्धिरिति। दिङ्नागस्तु

सत्प्रतिपक्षमनिश्चयस्यैव प्रकारं मनुते। धर्मकीर्तिस्तु सत्प्रतिपक्षमेव नाभ्युपगच्छति, यतोऽयं विरोधं जनयति। गङ्गेशमते सत्प्रतिपक्षस्तदा भवति यत्र एको हेतुः साध्यसिद्धिं विदधाति, द्वितीयस्तदभावं, तदा द्वितीयस्य विरोधो जायते। यथा - शब्दो नित्यो यतः स श्रूयते। शब्दोऽनित्यो यतः स उत्पद्यते। श्रूयत उत्पद्यत इत्युभयं परस्परं विरुद्धम्। अतोऽयं प्रकरणसमः सत्प्रतिपक्षो वा।

मीमांसका असिद्धानैकान्तिकबाधान् हेत्वाभासान् मन्वानाः सत्प्रतिपक्षं नाभ्युपगच्छन्ति। मानमेयोदयकारस्तु असाधारण इत्यतिरिक्तं हेत्वाभासं मनुते। जैनास्तु असिद्धविरुद्धानैकान्तिकान् मन्यन्ते। तत्र दिगम्बरा अकिञ्चिकर इति चतुर्थं हेत्वाभासं विशिष्टं मन्यन्ते।

सोऽयं सत्प्रतिपक्षः (प्रकरणसमः) उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानो निर्णयाय न कल्पते। तद्यथा- नित्यश्शब्दोऽनित्यधर्मानुपलब्धेर्यथाऽऽकाशम्; अनित्यश्शब्दो नित्यधर्मानुपलब्धेर्यथा स्थाल्यादि। एतेन नायं संशयसम इत्यवधार्यम्। यतो यत्र समानो धर्मो हेतुत्वेनोपादीयते, स च सव्यभिचार एव। साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इति लक्षणं, शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्, शब्दोऽनित्यः कार्यत्वाद्घटवदिति प्रयोगश्च प्रादर्शिषातां न्यायप्रकाशे स्वामिना चिद्घनानन्दगिरिवर्येण। अर्थात् यस्य हेतोः साध्याभावस्य साधकोऽपरः प्रतिपक्षहेतुर्विद्यमानस्तर्हि स हेतुः सत्प्रतिपक्ष उच्यते। अतस्तुल्यविरोधिन्येव सत्प्रतिपक्षः। सन् प्रतिपक्षः = सत्प्रतिपक्षः। लोके तुल्यव्यक्तिः प्रतियोगी वा। साध्याभावव्याप्यवत्पक्ष इति न्याये। तच्च स्पष्टं - साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं तत्त्वं बलञ्च व्याप्तिपक्षधर्मते विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा तत्त्वमिति गङ्गेशचिन्तामणौ।

तदुपरि **शतकोटि**नाम ग्रन्थरत्नमिदं न्यायपरम्परायां प्रथितं क्रोडपत्रक्रममाश्रित्य विद्वत्तल्लजैः **श्रीकुणिगलू रामशास्त्रि**वर्यैर्व्यरचि। शतकोटिः - शतं कोटयः पक्षा यस्य इति शतकोटिः पुमान् ग्रन्थे। शतगुणिता कोटिरिति शाकपार्थिवादिना स्त्रियामपि। सत्प्रतिपक्षगादाधर्या उपरि विरचितं क्रोडपत्रं शतकोटिनामकमिदं सर्वशास्त्रलोकप्रसिद्धमेव। न्यायाध्ययनपरम्परायां मूर्धन्यस्थानमावहति। क्रोडपत्रेऽस्मिन् नवतिः कोटयः सत्प्रतिपक्षगादाधर्या उपरि ग्रन्थकर्त्रा प्रादर्शिषत। दक्षिणाम्नायशृङ्गेरी-श्रीशारदापीठे मूर्ताभिषिक्ताः **श्रीश्रीश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनः** तृतीयकोटिमाश्रित्य **कुल्या**मारचयन्। कुल्या च परिपूर्णतामगात् **श्रीचन्द्रशेखरभारती-**श्रीचरणानामालेखनेन। सोऽयं कुल्यायुतश्शतकोटिग्रन्थो **विवेचिन्या** व्यभूषि **श्रीभारतीतीर्थ**श्रीचरणेभ्यः समधीतन्यायशास्त्रेण विदुषा **श्री वि.नवीनहोळ्ळार्येण** ।

प्रकृतेऽपूर्वेऽनुपमे व्याख्याने यथावसरं कोटिशो निविष्टानिविष्टदलसार्थक्यं, पूर्वोत्तरग्रन्थासङ्गतिशङ्कापरिहारो यथापेक्षमनुगम इति सर्वं व्यधायि। यद्यपि सर्वाः कोटयो न व्यवेचिषत तथापि प्रकरणान्तरे तास्तत्कोटिव्याख्यामुखेन परामृष्टा एव - यथा एकविंश्याः तिस्रः विंश्याम्। तथा नासम्भव इत्यष्टमी कोटिर्विस्तरेण व्याख्यायि। किञ्च क्वचिद् यथाश्रुतवाक्यार्थेऽनुपपत्तिः, क्वचिदतिप्रसङ्गः, क्वचिद् विप्रतिपत्तिः, क्वचित् पूर्वापरग्रन्थासङ्गतिरित्यादिकमाशङ्क्य सपरिष्कारं

ग्रन्थकृत्तात्पर्याविष्करणपुरस्सरं परिह्रियते। अपि च शतकोटिग्रन्थोक्तलक्षणपरिष्कारमनुसृत्यानुगमे परिष्कारोऽपि प्रादर्शि। इत्थं विवेचनीव्याख्येयं शतकोटिकृतां तात्पर्योपवर्णनेन तद्ग्रन्थग्रन्थिविभेदनेन च तदध्येतॄणां महत उपकाराय, विदुषाञ्च महते प्रमोदाय च स्यादिति विश्वसिति। अग्रे कोटिशोऽर्थसमन्वयपूर्वं दलसार्थक्यानुगमादि नूनं विद्वल्लोकलाभाय स्यात्।

श्रीमान् **नवीनहोळ्ळ**वर्यः समधीतन्यायशास्त्रः श्रीचरणश्लाघितविद्वन्मणिः परिसरेऽस्मिन् न्यायशास्त्रप्रवचनकर्मण्यभिरतो विवेचनीव्याख्यां विधाय श्रीचरणानां प्रीतिपात्रं वरीवर्ति। शिष्यसम्पत्त्या वैदुष्येण च परिसरप्रतिष्ठां संवर्धयन्समेधिषीष्ट विद्वन्मचर्चिका **नवीनहोळ्ळः**।

**शृङ्गेरीश्रीशारदापीठाधीशाः श्रीभारतीतीर्थमहास्वामिनः** अस्मत्परिसरकुशलविधातारो महत्याऽनुकम्पया ग्रन्थस्य स्वाशीर्भिः श्रीमुखमन्वग्रहीषतेति भागधेयन्नस्समेषाम्। श्रीचरणानान्निरवधिकानुग्रहेणैतादृशग्रन्था उत्तरोत्तरं प्राकाश्यं गम्यासुरिति अशेषविघ्नशमनमनीकेश्वरं प्रार्थयामहे।

परिसरद्वारैषमो ग्रन्थप्रकाशनायानुमतिं प्रदायास्मान् प्रोत्साहितवद्भ्य आमुखञ्च विरच्यानुगृहीतवद्भ्यो विद्वद्भ्योऽस्मत्कुलपतिभ्यः **प्रो.वेम्पटि कुटुम्बशास्त्रिवर्येभ्यो** नमोभणितिं व्याहरामः।

ग्रन्थप्रकाशनकर्मणि साहाय्यमाचरितवते शिक्षाशास्त्रिप्राध्यापकाय विदुषे **डा.रमाकान्तमिश्र-वर्याय**तेरभ्यश्च साधुवादा वितीर्यन्ते।

श्रीव्यय-मार्गशीर्ष-कृष्णैकादशी, इत्थं
स्थिरवासरः (१६-१२-२००६) विदां वचनकरः

**(रामानुजदेवनाथः)**

## ॥ उपोद्घातः ॥

महर्षिगौतमप्रणीतन्यायसूत्राण्येव श्रीमद्गङ्गेशोपाध्यायप्रवर्तितस्य नव्यन्यायशास्त्रस्याकर इति विदन्त्येव सर्वे शास्त्रविदः।

तत्र प्रमाणप्रमेयेत्याद्यादिमसूत्रे निर्दिष्टेषु षोडशपदार्थेषु प्रमाणानामेव निरूपणं नव्यन्याये बहुविस्तरेण व्यधायि। मानाधीनत्वात् मेयसिद्धेः। तत्रापि अनुमानमेव बहुप्रपञ्चितम्। असन्निकृष्टार्थसाधकत्वेन स्वस्वेतरसर्वप्रमाणप्रामाण्यसाधकत्वेन च प्रमाणमूर्धन्यत्वाद् अनुमानस्य। अनुमाने पुनः, व्याप्तिहेत्वाभासयोरेव निरूपणं प्राधान्यमावहति। अनुमानस्वरूपस्य व्याप्तिशरीरत्वात्, निवार्यत्वेन हेत्वाभाससापेक्षत्वाच्च। तत्र हेत्वाभासाः पञ्चधा विभक्ताः, तदुक्तं "ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च" (तत्त्वचिन्तामणिः) इति। अत्र सत्प्रतिपक्ष एव प्रकरणसम इति व्यवह्रियते स्म प्राचीनैः। तल्लक्षणमुक्तं न्यायसूत्रे "यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम" इति (१-२-७)। चिन्तामणौ तूक्तम्, "साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं तत्त्वम्" इति। इदं तु व्यावहारिकं लक्षणं भवति, न तु विभाजकम्। तत्तावत् दीधितौ रघुनाथशिरोमणिना प्रादर्शि, "विभाजकं तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम्" इति। लक्षणमेतत् सयुक्तिकं परिष्कृतं नव्यन्यायाम्बुधिपारङ्गतेन श्रीमद्गदाधरभट्टाचार्येण "प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयतावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृशविशिष्टनिरूपितविषयिता तादृशत्वमि"ति। पश्चात्, विषयितायां प्रतिबन्धकतानवच्छेदकान्तदलं परित्यज्य, प्रतिबद्ध्यतायां पक्षतावच्छेदकादिविशिष्टग्रहत्वाव्यापकत्वविशेषणं निवेश्य, सत्यन्तविशेष्यदलघटकप्रतिबद्ध्यतयोः एकधर्मावच्छिन्नत्वविवक्षणस्यावश्यकतां प्रादर्शयत् भट्टाचार्यः।

इत्थञ्च, पक्षतावच्छेदकविशिष्टपक्षविषयकत्वाव्यापकसाध्यतावच्छेदकविशिष्टसाध्यविषयकत्वाव्यापकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वमिति सत्प्रतिपक्षलक्षणं पर्यवसितम् ।

**शतकोटिग्रन्थः** । निरुक्तसत्प्रतिपक्षलक्षणस्य ह्रदो वह्निमानित्यत्रवह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिमुद्भाव्य, तत्परिहारव्याजेन विविधविनूतनपरिष्कारसरणिमारचयन् शतकोटिकृतः पण्डितप्रवर श्री रामशास्त्रिणः पूर्वपूर्वपरिष्कारे दोषाविष्करणपुरस्सरम् उत्तरोत्तरपरिष्कारमवतारयन्तः स्वीयकल्पनाचातुरीप्राचुर्यं प्रख्यापयन्तः शतकोटिनाम्ना नवतिकोटीः न्यबध्नन् । तत्र, पञ्चाशत्तमकोटिपर्यन्तं प्रतिबन्धकताघटितस्य निरुक्तलक्षणस्य अतिव्याप्तिपरिहारप्रयासो विहितः एकपञ्चाशत्तमकोटितः नवतितमकोटिपर्यन्तं निष्कृष्टस्य प्रतिबन्धकताऽघटितस्य सत्प्रतिपक्षलक्षणस्य निर्दुष्टत्वसम्पादनायासो व्यधायि । अत्र तृतीयकोटिमाक्षिप्य श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनः कुल्यानाम्ना कतिपयकोटीनां सरणिं प्रावर्तयन् । अपूर्णाम् इमां श्रीचन्द्रशेखरभारती महास्वामिनः अनुवर्त्य मूलेन समगमयन् ।

**विवेचनी** – सत्प्रतिपक्षशतकोटिकुल्ययोः विवेचनात्मकव्याख्याया विवेचन्या इदं वैशिष्ट्यं भवति, यत् शतकोटौ कुल्यायाञ्च तत्र तत्र प्रदर्शितानां परिष्काराणां निष्कर्षः, दलसार्थक्यञ्च अत्र प्रादर्शि । यथा २० तमकोटौ, ६२ तमकोटौ, ६७ तमकोटौ न निविष्टोभयाभावदलघटकदलानां सार्थक्यविचारः । क्वचिद् यथाश्रुतवाक्यार्थे विप्रतिपत्तिः, क्वचिच् अनुपपत्तिः क्वचिदतिप्रसङ्गः, तत्परिहारश्च तत्र तत्रोपदर्श्यन्ते...। यथा ३० तमकोटौ "तस्य बाधघटितत्वेन.." इत्यादौ निरुक्तसत्प्रतिपक्षस्य बाधघटितत्वविचारे विप्रतिपत्तिः, तत्समाधानम् । क्वचित् पूर्वोत्तरग्रन्थासङ्गतिराशङ्क्य परिह्रियते । यथा ५९ तमकोटौ ७९ तमकोटौ च ।

इत्थमधीतशतकोटीनां तदध्ययने तदध्यापने वा प्रवृत्तानां च तत्र तत्र कोटिषु सम्भाव्यमाना अनुपपत्त्यादयः अत्र विवेचन्यां पूर्वपक्षत्वेनानूद्य, सयुक्तिकं

ग्रन्थकृत्तात्पर्योपवर्णनेन निरस्यन्ते । मूलोक्तलक्षणानि सर्वाणि तदनुगमाश्च यथावसरं परिष्कृत्य निष्कृष्यन्त इति ।

अस्माकं राष्ट्रियसंस्कृतसंस्थानस्य माननीयकुलपतिमहोदयाः प्रो.वेम्पटि कुटुम्बशास्त्रिणः नूतनस्यापि एतद्व्याख्यानस्य प्रकाशने अविलम्बेन अनुमतिं प्रदाय स्वीयशास्त्रसंरक्षणौत्कव्यम् आविरकुर्वन् । तेभ्यः हार्दं कार्तज्ञ्यं समर्पयामि । अस्मत्परिसरप्राचार्याः प्रो. रामानुजदेवनाथाचार्याः इमं ग्रन्थं राजीवगान्धीपरिसरद्वारा प्रकाशयितुं कृतसङ्कल्पाः, तदर्थं कुलपतिमहोदयानाम् अनुमितिं सम्पाद्य ग्रन्थप्रकाशनकार्यम् अविलम्बेन यथौचित्यं प्रावर्तयन् । प्रशासनकुशलिनामेषां नेतृत्वे आस्माकीनोऽयं परिसरः ग्रन्थप्रकाशने प्रथमं पदं न्यस्यति । एतेभ्यः प्राचार्येभ्यः हार्दं धन्यवादान् वितरामि । तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठे आचार्यपदमलङ्कुर्वाणाः प्रथितनैयायिकाः प्रो.का.ई. देवनाथाचार्याः ग्रन्थमिममामूलाग्रमसकृत् परिशील्य अस्य प्रकाशनयोग्यताम् अङ्ग्यकुर्वन् । तानहं धन्यवादार्पणेन हार्दं सम्मानयामि । एवं, वारणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालये संशोधनविभागनिर्देशकाः विश्रुतनैयायिकाः प्रो. राजारामशुक्लमहोदया अपि ग्रन्थं पर्यवेक्ष्य प्रकाशनार्हम् अभिप्रायन् । तेभ्यः हार्दिकीं कृतज्ञतां वितनोमि । वेदब्रह्मश्री वै. राममूर्तिश्रौतिमहोदयाः अक्षरपुटविन्यासेन महत्साहाय्यं समाचरन् । तेभ्यः हार्दान् धन्यवादान् अर्पयामि ।

यद्यपि, शतकोटिविमर्शने प्रवृत्तेयं व्याख्या, शतकोटिमापाततोऽधीयानानां नातीवोपयोगिनी, तथापि तद्ग्रन्थग्रन्थिविभेदनपुरस्सरम् अमुं स्वायत्तीकर्तुमुत्सहमानानां, स्वीयबुद्धिवैशद्यमुत्कर्षं गमयितुकामानां तत्त्वबुभुत्सूनां च अवश्यं कञ्चनोपकारं महान्तं प्रमोदं च जनयेदेवेति विश्वसिमि ।

स्वस्तिश्रीव्ययवत्सरः
मार्गशीर्षकृष्णतृतीयागुरुवासरः
७-१२-२००६

इति
सुधीजनविधेयः
वि. नवीनहोळ्ळः

## ॥ विषयसूची ॥

********************************

॥ श्रीगुरुभ्यो नमः ॥

# सत्प्रतिपक्षशतकोटिः

पक्षतावच्छेदकविशिष्टपक्षविषयकत्वाव्यापकसाध्यतावच्छेदकविशिष्टसाध्यविषयकत्वाव्यापकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वमिति सत्प्रतिपक्षलक्षणम् ।

अस्यायमनुगमः- निरुक्तप्रतिबद्ध्यताविशिष्टधर्मवत्वम् प्रतिबद्ध्यतावैशिष्ट्यं चाधेयतासम्बन्धेन । आधेयता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धावच्छिन्ना । स्वनिष्ठावच्छेदकता च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । स्वाधिकरणत्वं च स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वनिरूपितप्रतिबन्धकतावत्वस्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकत्वोभयसम्बन्धेनेति ॥

१. अथात्र ह्रदो वह्निमानित्यादौ वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिः, तद्विषयताया निरुक्तप्रतिबन्धकत्वजनकतावच्छेदकत्वयोस्सत्वात् ॥

# विवेचनी

माङ्गल्यमूर्तिमतिमञ्जुलमन्दहासां कारुण्यपूर्तिमतिसूर्यसहस्रभासाम् ।
प्रज्ञानशक्तिमवदातहृदैकवासां श्रीशारदां भुवनमातरमानतोऽस्मि ॥ १॥

तापत्रयप्रखरभानुविशोषितेऽत्र मातस्त्वदीयकरुणार्णवलेशमात्रात् ।
उद्भिद्य पद्ममुदभून्ननु चित्तपङ्के तन्मानसं त्वयि समर्पणमेतु देवि ॥ २ ॥

प्रत्यूहसंदोहविनाशदक्षं गौर्यम्बुजास्यस्फुटनैकहेतुम् ।
कैलासशैलेशसुतं नितान्तं हस्तीन्द्रवक्त्रं हृदि संस्मरामि ॥३॥

न्यायोपदेष्टारमनन्तकीर्तिं विद्याविभूतिं गुरुसार्वभौमम् ।
श्रीशारदापीठपदाधिरूढं श्रीभारतीतीर्थयतिं नमामि ॥ ४ ॥

वीणाप्रवीणासमुपासितारं वाणीसुधास्रावियशोब्धिचन्द्रम् ।
संतीर्णशास्त्रार्थमहासमुद्रं तं देशिकेशं हृदि भावयामि ॥ ५॥

शारदाशरणां नृणां शरणं भवतारीणीम् ।
शङ्करीं शाङ्करीं वन्दे गुर्वीं गुरुपरम्पराम् ॥ ६ ॥

देवं नृसिंहमाराध्य मातरं पितरं ततः ।
श्रीमतीं गिरिजां वन्दे श्रीमन्महाबलेश्वरम् ॥ ७ ॥

अथो सत्प्रतिपक्षस्य न्यायग्रन्थस्य विश्रुतम् ।
शतकोट्यभिधं विद्वद्रामशास्त्रिविनिर्मितम् ॥ ८ ॥

जटिलं युक्तिजालेन क्रोडपत्रं सतां मुदे ।
विवेचयामि सश्रद्धं तान् प्रणम्य यथामति ॥ ९ ॥

*****************

२. नच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्न-विषयकत्वम् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्ना-घटितत्वरूपविशिष्टान्तराघटितत्वस्य मेयत्वविशिष्टसत्प्रतिपक्षेऽ[ति]व्याप्तिवारणायावश्यं निवेशनीयतया तत एव नोक्तातिप्रसङ्गः उक्तविशिष्टस्य वह्न्यभाववद्ध्रदरूपतादृशविशिष्टान्तरघटितत्वादि[ति] वाच्यम् ॥

---

## विवेचनी

२) विशिष्टान्तराघटितत्वस्येति ।

विशिष्टान्तराऽघटितत्वस्य चाऽयमनुगमः– धर्मविशिष्टधर्मवत्त्वम् । धर्मे धर्मवैशिष्[ट्यं] च तादात्म्यस्वविशिष्टप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । प्रतीतौ स्ववैशिष्[ट्यं] च स्वविशिष्टधर्मावच्छिन्नविषयतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक[-]प्रतियोगिताकभेदवत्त्वसम्बन्धेन । धर्मे स्ववैशिष्ट्यं च स्वविशिष्टप्रतीतिविषयता[-]वच्छेदकत्वस्वसमानकालिकप्रकृतानुमितिप्रतिबन्धकतावृतित्वोभयसम्बन्धेन । प्रती[तौ] स्ववैशिष्ट्यं च स्वावच्छिन्नविषयतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रति[-]योगिताकभेदवत्वसम्बन्धेन । प्रतिबन्धकतावृत्तित्वं च स्वसमानाधिकरणभे[द-]प्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक[-]भेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं च स्वावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्य[-]ज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्त्वञ्च स्वरूपसम्बन्धे[न] तादात्म्यसम्बन्धाऽप्रवेशे, वह्न्यभावव्याप्यवद्ध्रदत्वादिवैशिष्ट्यस्य मेयत्वविशिष्[ट-]वह्न्यभावव्याप्यवद्ध्रदत्वे सत्त्वात् मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिः । अतः तत्प्रवेश[े] स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धाऽप्रवेशने मेयत्वविशिष्टवह्न्य[-]भावव्याप्यवद्ध्रदत्ववैशिष्ट्यस्य मेयत्वविशिष्टवह्न्यभावव्याप्यवद्ध्रदत्वे सत्वा[त्] पुनस्तद्दोषतादवस्थ्यम् । अतो द्वितीयसम्बन्धप्रवेशः ॥

३. बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय विशिष्टान्तरविषयितायां प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्ववज्जनकतानतिरिक्तवृत्तित्व-स्यापि निवेशनीयतया उक्तातिप्रसङ्गतादवस्थ्यात् । वह्न्यभाववद्ध्रद-विषयकत्वस्य प्रतिबन्धकताऽनतिरिक्तवृत्तित्वेऽपि जनकताऽनतिरिक्त-वृत्तित्वविरहात् ॥

४. नच यद्रूपावच्छिन्नविषयकत्वं निरुक्तविरोध्यनुमितिजनकताऽनतिरिक्त-वृत्ति तादृशरूपान्तराघटितत्वस्य विवक्षणेऽपि मेयत्वविशिष्टसत्प्रति-पक्षातिव्याप्तिवारणसम्भवान्निरुक्तविशिष्टे नातिव्याप्तिरिति वाच्यम् ॥

५. वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपसत्प्रतिपक्षा-ऽव्याप्तिवारणाय प्रतिबन्धकतानतिरिक्तवृत्तित्वस्यापि विशिष्टान्तर-

---

विवेचनी

३) बाधघटितसत्प्रतिपक्ष इति ।

ह्रदः समानाधिकरणजलाभाववान् इत्यादौ जलादेः प्रतिहेतुतायां जल-व्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदादौ समानाधिकरणजलवद्ध्रदादि-रूपबाधघटित इत्यर्थः ।

अत्र कोटौ विशिष्टान्तराऽघटितत्वस्यानुगमे विशेषस्तु, प्रतिबन्धकता-वृत्तित्वम् इत्यत्र प्रतिबद्ध्यतावृत्तित्वमिति निवेशनीयम् ।

वृत्तित्वं च स्वसमानाधिकरणेत्यादिसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वनिरूपितप्रतिबन्धकतावत्त्वस्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकता-वच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावत्त्व-एतदुभयसम्बन्धेन ॥

४) अत्र विशिष्टान्तराऽघटितत्वस्य अनुगमे विशेषस्तु-

अन्ते भेदप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धमध्ये स्वनिरूपित-प्रतिबन्धकतावत्त्वं परित्यज्य स्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतेत्यादिजनकतावत्त्वमात्रं निवेशिनीयम् ।

५) वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपसत्प्रतिपक्षेति ।

ह्रदो वह्निमान् इत्यत्र वह्न्यभावव्याप्यव्याप्यस्य प्रतिहेतुतायां वह्न्यभावव्याप्य-

विषयितायां निवेशनीयतया उक्तविशिष्टेऽतिव्याप्तेर्दुर्वारत्वात् ॥

६. नच सत्यंतघटकप्रतिबन्धकतायां निरुक्तजनकतावच्छेदक-विषयितात्वव्यापकावच्छेदकताकत्वनिवेशान्नोक्तातिप्रसङ्गः प्रत्येकज्ञानीय वहन्यभावव्याप्यव्याप्यवद्ध्रदविषयितायां निरुक्तजनक-तावच्छेदिकायां निरुक्तप्रतिबन्धकतावच्छेदकत्वविरहादिति वाच्यम् ।

७. निरुक्तजनकतावच्छेदकसत्प्रतिपक्षोन्नायकविषयिताय सत्प्रतिपक्षज्ञानप्रतिबन्धकतावच्छेदकत्वविरहेणाऽसम्भवप्रसङ्गे निरुक्तपरिष्काराऽसम्भवात् ॥

८. नच यत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापकावच्छे-दकताकत्वनिवेशान्नाऽसम्भवः, सत्प्रतिपक्षज्ञानीयप्रतिबन्धकता-वच्छेदकतायां तत्ज्ञानीयजनकतावच्छेदकविषयितात्वव्यापकत्वसत्वात

---

विवेचनी

व्याप्यव्यापकवह्न्यभावसमानाधिकरणवह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपे सत्प्रतिप इत्यर्थः । न तु पूर्वपक्षव्याप्तिघटितः सत्प्रतिपक्षोऽत्र अभिप्रेतः । तत्र प्रतिहेतो विशिष्य निवेशाभावात् ।

६) अत्र सत्प्रतिपक्षलक्षणानुगमे विशेषस्तु-

स्वनिरूपितप्रतिबन्धकतावत्त्वस्थाने स्वविशिष्टप्रतिबन्धकतावत्त्वं निवेशनीय स्ववैशिष्ट्यं च स्वनिरूपितत्त्वस्वसेत्यादिभेदवत्त्वोभयसम्बन्धेन । तत्र स्वाधिकरण च स्वावच्छेदकावच्छिन्नेत्यादिजनकता वच्छेदकविषयितात्वसम्बन्धेन भेदप्रतियोगितावच्छेदकत्वं चावच्छेदकतासम्बन्धेन ।

८) नाऽसम्भव इति ।

अथैवमपि विशेष्यदलस्य वैयर्थ्यं दुर्वारम् । विरोध्यनुमितिजनक तावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वघटितसत्यन्तदलेनैव बाधेऽतिव्या प्तेर्वारणात् । बाधनिश्चयीयप्रतिबन्धकतायां विरोध्यनुमितिजनकतावच्छेदक विषयितात्वव्यापकावच्छेदकताकत्वविरहादिति चेत् ।

न । बाधातिव्याप्तिवारकतया तद्दलस्य सार्थक्याऽसम्भवेऽपि कालीनत्व घटितविशिष्टेऽतिव्याप्तिवारकतया तस्य सार्थक्यसम्भवात् । तथाहि-ह्रदो वह्निमा

नच यत्किञ्चित्त्वनिवेशादननुगम इति वाच्यम् । स्वविशिष्ट-प्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्नत्वेन पूर्वोक्तभेदप्रतियोगिता-

---

विवेचनी

विषयिताकै कालीनत्वघटितोक्तविशिष्टेऽतिव्याप्तिर्भवत्येव । तद्विषयितायां विरोध्यनुमितिजनकतानतिरिक्तवृत्तित्वस्य तु विरहात् विशेष्यदलोपादानेन तत्र अतिव्याप्तिर्वार्यते ।

यत्तु- वह्न्यभाववद्ध्रदादिरूपबाधविषयितायां यत्किञ्चिदनुमितिजनक-तावच्छेदकताया अपि विरहेण तन्निवेशेनैव तादृशबाधातिव्याप्तिवारणसम्भवात्, प्रकृतानुमितिविरोध्यनुमितिजनकतावच्छेदकतापर्यन्तनिवेशस्य न तादृशबाधातिव्याप्ति-वारणमसाधारणप्रयोजनम् । अपि तु, पर्वतो वह्निव्याप्याभाववानित्यत्र वह्निव्याप्य-वत्पर्वतरूपबाधे वह्न्यनुमितिजनकतावच्छेदकविषयिताके अतिव्याप्तिवारणमेव । तच्च, सत्यन्तघटकप्रतिबन्धकतायां व्यापकावच्छेदकताकान्तविशेषणस्योपादानेऽप्युपपद्यत एव ।

तथाहि- ह्रदो वह्न्यभाववान् इत्याकारकबाधनिश्चयीयप्रतिबन्धक तामादायैव वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे अतिव्याप्तेः पूर्वमाशङ्कित तया, तत्प्रतिबन्धकतावच्छेदकविषयितायाः यत्किञ्चि दनुमितिं प्रत्यपि जनकता-वच्छेदकताविरहेण, सत्यन्तघटकप्रतिबन्धकतायां यत्किञ्चिदनुमिति निरूपित-जनकतावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वनिवेशेनैव इत्यत्र जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयकनिश्चयस्य प्रकृतानुमितिं प्रति सत्प्रतिपक्षनिश्चयसाधारणरूपेण प्रतिबन्धकतया तदवच्छेदकतायां जलव्यापक-वह्न्यभावसमानाधिकरणजलवद्ध्रदात्मकसत्प्रतिपक्षविषयकनिश्चयनिष्ठ-विरोध्यनुमितिजनकतावच्छेदकविषयितात्वव्यापकत्वमस्ति ।[1] तथा च निरुक्तकालीनत्वघटितविशिष्टविषयकनिश्चयीयायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः

---

1. न च जनकतावच्छेदिकायां सामानाधिकरण्यविषयितायां प्रतिबन्धकता-वच्छेदकताविरहात् न व्यापकतासम्भव इति वाच्यम् । मुख्यविशेष्यितात्वं निवेश्य समाधानस्य वक्ष्यमाणत्वात् ।

वच्छेदकताया विवक्षणीयत्वात् । स्वविशिष्टत्वं स्वनिरूपितत
स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदक-
विषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्ट-
त्वोभयसम्बन्धेन । जनकताविशिष्टत्वं स्वनिष्ठावच्छेदकताक-
प्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वनिष्ठावच्छेदकता च स्वसमाना-
धिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना ।
स्वाधिकरणत्वं च स्वावच्छेदकविषयितात्वसम्बन्धेन । भेदप्रति-
योगितावच्छेदकता च स्वावच्छेदकत्वसम्बन्धावच्छिन्नेति वाच्यम् ॥

---

## विवेचनी

लक्षणघटकतया तदनतिरिक्तवृत्तिदर्शितोभयवद्ध्रदातिव्याप्तेः प्रतीकारसम्भवात् त
प्रकृतानुमितिविरोधित्वं न विवक्षणीयम् । तथा च, 'पर्वत
वह्निव्याप्यवान्' इत्याकारकबाधनिश्चयस्य प्रकृतानुमितिविरोध्यनुमितिं प्रत्यजनकत्वेऽ
'पर्वतो वह्निमान्' इत्याकारकानुमितिं प्रति जनकतया तदवच्छेदक
विषयितात्वव्यापकावच्छेदकताकप्रतिबन्धकतावत्त्वेन वह्निव्याप्य वत्पर्वते अतिव्याप्
प्रसज्यत एव। विशेष्यदलोपादाने तु, वह्निव्याप्यवत्पर्वतविषयितायां प्रकृतानुमितिविरोध्य
नुमितिजनकतानतिरिक्तवृत्तित्वविरहात् तत्राऽतिव्याप्तिः वार्यत इति ।

तन्न । यत्किञ्चिदनुमितिजनकतावच्छेदकविषयितात्वव्यापकत्व
निवेशाऽसम्भवात्, प्रकृतानुमितिविरोध्यनुमितिजनकतावच्छेदकविषयितात्व
व्यापकत्वस्यैव निवेशनीयत्वात् । तथाहि । यत्किञ्चित्त्वं जनकतायामनुमितौ
विवक्षितम् ? आद्ये, उभयवद्ध्रदातिव्याप्तितादवस्थ्यम् । वह्न्यभाववद्ध्रदवा
देशः इत्याकारकानुमितिनिरूपिता या ह्रदो वह्न्यभाववान् इत्याकारकज्ञाननि
विशेषणतावच्छेदकप्रकारकज्ञानत्वेन जनकता, तदवच्छेदकविषयितात्वव्यापकत्वस
बाधनिश्चयीयप्रतिबन्धकतावच्छेदकतायां सत्त्वात् । द्वितीये, असम्भवः । ह्र
वह्न्यभाववान् इत्याकारकानुमिति- निरूपितजनकतावच्छेदकविषयितात्ववत्
वह्न्यभावव्याप्यवद्ध्रदविषयितायां जलव्यापकवह्न्यभावसमानाधिकरण
जलवद्ध्रदविषयितायां वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदविषयिता

वहन्यभावःइत्याकारकज्ञानीयवहन्यभावविषयितायां [1] च वर्तमानायाः प्रतिबन्धकतावच्छेदकतायाः अप्रसिद्धेः ।

न चैवं सति सत्यन्तदले प्रकृतानुमितिविरोध्यनुमितिनिष्ठजन्यतानिरूपितयत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापकत्वपर्यन्तनिवेशेऽपि उभयवद्ध्रातिव्याप्तितादवस्थ्यम् । वहन्यभाववद्ध्रदवान् देश इत्याकारकानुमितीयाया वहन्यभाववद्ध्रदविषयिता प्रकृतानुमितिप्रतिबन्धकतावच्छेदिका, तदवच्छिन्ना या वहन्यभाववद्ध्रदवान् देश इत्याकारकानुमितिनिष्ठा जन्यता, तन्निरूपितायाः विशेषणतावच्छेदकप्रकारकज्ञानत्वावच्छिन्नजनकतायाः ह्रदो वहन्यभाववान् इत्याकारकबाधनिश्चयनिष्ठायाः तादृशयत्किञ्चिज्जनकतापदेन धर्तुं शक्यत्वात् । तदवच्छेदकविषयितात्वव्यापकत्वस्य बाधनिश्चयीयप्रतिबन्धकतावच्छेदकतायाम् अक्षतत्वादिति वाच्यम् ।

उक्तयुक्त्या वह्निव्याप्यवत्पर्वतविषयितायामपि विशेष्यदलोपपादन सम्भवेन [2] वह्निव्याप्यवत्पर्वते बाधेऽतिव्याप्तेः वारणाय प्रकृतानुमिति प्रतिबन्धकतावच्छेदकतासामानाधिकरण्यमनुपादाय तद्व्याप्यत्वस्यैव जन्यतावच्छेदकतायां विवक्षणीयत्वात्, प्रकृते उभयवद्ध्रदातिव्याप्तेः वारणाय सत्यन्तदलेऽपि प्रकृतानुमितिप्रतिबन्धकतावच्छेदकताव्याप्यत्वस्यैव अनुमितिनिष्ठजन्यतावच्छेदकतायां निवेशनीयत्वात् । वहन्यभाववद्ध्रदवान् देशः इत्याकारकानुमितिनिष्ठजन्यतावच्छेदकतायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकताशून्यदेशविषयितावृत्तित्वेन तदव्याप्यतया लक्षणघटकताविरहात् नोक्तातिव्याप्तिः । जन्यतावच्छेदकता च विषयितानिष्ठत्वेनापि विशेषणीया । तेन, प्रतिबन्धकतावच्छेदककोटावप्रविष्टस्याऽनुमितित्वस्य परामर्शजन्यतावच्छेदककोटिप्रवेशेऽपि न क्षतिः ।

---

1. ह्रदो वहन्यभाववान् इत्याकारकबुद्धिं प्रति वहन्यभावः इत्याकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया जनकत्वात् ।

2. प्रकृतानुमितिप्रतिबन्धकतावच्छेदिका या वह्निव्याप्यवत्पर्वतवान् देशः इत्याकारकानुमितीया वह्निव्याप्यवत्पर्वतविषयिता तदवच्छिन्ना वह्निव्याप्यवत्पर्वतविधेयकानुमितिनिष्ठा जन्यता, तन्निरूपिता विशेषणतावच्छेदकप्रकारकज्ञानत्वावच्छिन्ना जनकता पर्वतो वह्निव्याप्यवान् इति बाधनिश्चये भवति ।

९. जनकतावच्छेदिकायां सामानाधिकरण्यविषयिताया
सत्प्रतिपक्षज्ञानीयप्रतिबन्धकतावच्छेदकत्वविरहेण प्रतिहेतु
व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्ति
प्रसङ्गात् ॥

१०. नचावच्छेदककोटिप्रविष्टानामवच्छेदकत्वानङ्गीकारेण विनि
गमनाविरहप्राप्तां पक्षविषयित्वावच्छिन्नां साध्याभावानुमिति
जनकतामादायैव निरुक्तसत्प्रतिपक्षे लक्षणसमन्वयः, तदङ्गीकारेऽ
जनक तावच्छेदकमुख्यविशेष्यतात्वव्यापकत्वस्यैव प्रतिबन्धकता
वच्छेदक तायां निवेशेन लक्षणसमन्वयः, तथाच नोक्तातिव्याप्तिरि
वाच्यम् ॥

---

## विवेचनी

इत्थञ्च प्रकृतानुमितिविरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकतायाः ए
सत्यन्तदले निवेश्यतया, 'पर्वतो वह्निव्याप्यवान् इत्याकारकबाधनिश्चयीयजनकता
अतादृशतया लक्षणघटकत्वाऽसम्भवेन तत्र बाधेऽतिव्याप्तिः नैव प्रसज्यते ।

तथा च स्वविशिष्टप्रतिबन्धकतावत्वसम्बन्धावच्छिन्नत्वेन पूर्वोक्त
भेदप्रतियोगितावच्छेदकतायाः विवक्षणीयत्वात् इति मूले (शतकोट
भेदप्रतियोगितावच्छेदकताघटकसम्बन्धत्वेनोक्तं स्वविशिष्टप्रतिबन्धकताव
स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्न
नुमितिनिष्ठजन्यतानिरूपितजनकतावत्त्वस्योपलक्षकमिति[1] ध्येयम् ।

१०) न चावच्छेदककोटिप्रविष्टानाम् इति ।

अवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वं नास्तीति पक्षे प्रतिहेतु
व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमान् पक्षः इति परामर्शीयजनक
तानिरूपितस्वरूपसम्बन्धावच्छिन्नावच्छेदकतापक्षविषयितायां भवति
तन्निरूपितावच्छेदकता अवच्छेदकत्वसम्बन्धावच्छिन्ना प्रतिहेतुविषयितायां भवति

---

1. स्वविशिष्टप्रतिबन्धकतावत्वस्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावच्छेद
विषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावत्वोभयसम्बन्धेनैव भेदप्रतियोगित
वच्छेदकत्वं विवक्षणीयम् । न तु स्वविशिष्टप्रतिबन्धकतावत्वसम्बन्धमात्रं भेदप्रतियोगितावच्छेदकत
घटकसम्बन्धतया निवेश्यमिति भावः ।

तदवच्छेदकता सामानाधिकरण्यविषयितायां, तदवच्छेदकता साध्याभावविषयितायां, तदवच्छेदकता व्यापकत्वविषयितायां, तदवच्छेदकता प्रतिहेतुविषयितायाम् ।

एवं प्रतिहेत्वादिविषयितानामपि दर्शितपरामर्शीयजनकतानिरूपित-स्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वं भवति, विनिगमनाविरहात् । पक्ष विषयितायाः इव प्रतिहेत्वादिविषयितानामपि स्वरूपसम्बन्धेन परामर्शवृत्ति तायास्तुल्यत्वात् । प्रतिहेतुविषयितानिष्ठायास्तु जनकतावच्छेदकतायाः अवच्छेदकं पक्षविषयितासामाना-धिकरण्यविषयितोभयम् । तत्र सामानाधिकरण्यविषयितानिष्ठावच्छेदकतायाः अवच्छेदिका साध्याभावविषयिता । तन्निष्ठावच्छेदकतायाः अवच्छेदिका व्यापकत्वविषयिता । तन्निष्ठावच्छेदकतायाः अवच्छेदिका प्रतिहेतुविषयिता । सामानाधिकरण्य विषयितानिष्ठजनकतावच्छेदकतायाः अवच्छेदकं प्रतिहेतुविषयितासाध्याभाव-विषयितोभयम् । तत्र प्रतिहेतुविषयितानिष्ठावच्छेदकतायाः अवच्छेदिका पक्षविषयिता; साध्याभावविषयितानिष्ठावच्छेदकतायाः अवच्छेदिका व्यापकत्वविषयिता । तन्निष्ठावच्छेदकतायाः अवच्छेदिका प्रतिहेतुविषयिता । एवं साध्याभावादिविषयितानामपि जनकतावच्छेदकत्वं सम्भवति । तथा च जनकतावच्छेदकतायाः सामानाधिकरण्य-विषयितायां सत्त्वेऽपि तन्निष्ठा जनकतावच्छेदकता पक्षविषयितानिष्ठजनकतावच्छेदकतातो अतिरिक्तैव । एवं प्रतिहेत्वादिविषयिता निष्ठावच्छेदकताः अपि परस्परं भिन्ना एव । तत्तज्जनकतावच्छेदकतानां स्वाश्रयस्वावच्छेदकभेदेन परस्परभेदस्य आवश्यकत्वात्। अतः पक्षविषयित्वप्रतिहेतुविषयित्वसामानाधिकरण्यविषयित्वाद्यवच्छिन्नाः जनकताः अपि परस्परं भिद्यन्ते । तत्तदवच्छेदकधर्माणां विषयितानां तत्तदवच्छेदकतानां च परस्परं भेदात् ।

इत्थञ्च यत्किञ्चिज्जनकतापदेन पक्षविषयित्वावच्छिन्नजनकतायाः परिग्रहे तदवच्छेदकविषयितात्वं न सामानाधिकरण्यादि विषयितासु, अपि तु पक्षविषयितायामेव भवति । तत्र च प्रतिबन्धकतावच्छेदकतायाः अक्षतत्वात् यत्किञ्चिज्जनकता-वच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वं व्यापकताघटितसत्प्रतिपक्ष-निश्चयीयप्रतिबन्धकतायां सम्भवति ।

११. जलव्यापकवह्न्यभावसमानाधिकरणजलवान्ह्रदः, शैवाल व्यापकवह्न्यभावसमानाधिकरणशैवालवान्ह्रद इति निखिलपरामर्श साधारण्येन स्वावच्छिन्नविषयतानिरूपितव्यापकत्वविषयतानिरूपित साध्याभावत्वावच्छिन्नविषयतानिरूपितसामानाधिकरण्यविषयता निरूपितत्वस्वावच्छिन्नत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टविषयता निरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन उक्तसकलनिश्चया नामेकरूपेण जनकत्व स्वीकारात् । निरुक्तजनकतावच्छेदकविषयता त्वस्य शैवालव्यापकवह्न्यभावसमानाधिकरणशैवालवद्ध्रदविषयता सत्वेन तत्र जलव्यापको वह्न्यभाव इत्याकारकज्ञानवैशिष्ट्यावच्छिन्न प्रतिबन्धकतावच्छेदकताया असत्वेन निरुक्तसत्प्रतिपक्षाव्याप्तेर्दुर्वारत्वा तथाचोक्तपरिष्कारा सम्भवेनोक्तातिव्याप्ति तादवस्थ्यम् ॥

---

विवेचनी

मुख्यविशेष्यतेति ।

विशेष्यतायाः मुख्यत्वमवच्छिन्नत्वतादात्म्यान्यतरसम्बन्धेन प्रकारताविशिष्टान्यत्व विशेष्यितायाः मुख्यत्वं तु मुख्यविशेष्यतानिरूपितत्वम् ।[1]

अत्र कोटौ सत्प्रतिपक्षलक्षणानुगमे विशेषः –

पूर्वानुगमे स्वाधिकरणत्वं स्वावच्छेदकविषयितात्वसम्बन्धेनेत्युक्तम् । तत्स्थ स्वविशिष्टविशेष्यतात्वसम्बन्धो निवेशनीयः । वैशिष्ट्यं च स्वावच्छेदकत्व स्वसमानकालिकप्रकारताविशिष्टान्यत्वैतदुभयसम्बन्धेन । प्रकारतावैशिष्ट्य अवच्छिन्नत्वतादात्म्यान्यतरसम्बन्धेन ।

---

1. न तु निरुक्तान्यतरसम्बन्धेन प्रकारिताविशिष्टान्यत्वम् । ययोः विषयत निरूप्यनिरूपकभावः तन्निरूपितविषयितयोः अवच्छेद्यावच्छेदकभावेन, पर्व वह्निमान् इत्यादिज्ञानीयपर्वतादिविषयितायाः वह्न्यादिप्रकारिता- वच्छिन्नत्वे मुख्यविशेष्यितात्वानुपपत्तेः ।

१२. न च 'जलव्यापको वह्न्यभावः जलवांश्च ह्रदः' 'शैवालव्यापको वह्न्यभाव', 'शैवालवांश्च ह्रद' इत्यादिसकलनिश्चयसाधारण्येन स्वनिरूपितव्यापकत्वनिष्ठप्रकारतावच्छेदकतावच्छेदकावच्छिन्नप्रकारता-निरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपकत्वस्वनिरूपकनिश्चय-विशिष्टत्वोभयसंबन्धेन वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्ट-निश्चयत्वेनैकप्रतिबन्धकत्वाङ्गीकारात्, निरुक्तानुगतजनकतावच्छेदक-विषयितात्वव्यापकत्वं निरुक्तप्रतिबन्धकतावच्छेदकतायामक्षतमिति निरुक्तसत्प्रतिपक्षे लक्षणसमन्वयसम्भवेनोक्तपरिष्कारे न कोऽपि दोष इति वाच्यम् ॥

---

विवेचनी

१२) वह्न्यभावत्त्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेन एकप्रतिबन्धकत्वाङ्गीकारादिति ।

नन्वत्र वह्न्यभावत्वावच्छिन्नविशेष्यतावैशिष्ट्यं निश्चयत्वे न सम्भवति, वैशिष्ट्यघटकसम्बन्धस्य स्वनिरूपितव्यापकत्वनिष्ठप्रकारतावच्छेदकता-वच्छेदकावच्छिन्नप्रकारतानिरूपितह्रदत्वाद्यवच्छिन्नविशेष्यतानिरूपकत्वादेः निश्चयत्वे विरहात् इति चेत् ।

न । निश्चये एवोक्तवैशिष्ट्यस्य विवक्षितत्वात् । तथाच वह्न्यभावत्वा-वच्छिन्नविशेष्यतावैशिष्ट्यनिश्चयत्वोभयं प्रतिबन्धकतावच्छेदकम् । नचैवं सति वह्न्यभावत्वावच्छिन्नविशेष्यतायाः प्रतिबन्धकतावच्छेदकत्वमनुपपन्नं, तद्वैशिष्ट्यस्यैवावच्छेदकत्वात् । न चेष्टापत्तिः, तस्याः तदनभ्युपगमे निरुक्तप्रतिबन्धकता-वच्छेदकतायाः वह्न्यभावत्वावच्छिन्नविशेष्यतायामेव सत्त्वेन इत्याद्यग्रिम-(१३)कोट्यसङ्गतेः इति वाच्यम् । तादृशविशेष्यतानिश्चयत्वोभयस्य अवच्छेदकत्वे एव तात्पर्यात् । न च वैशिष्ट्यस्य प्रतिबन्धकतावच्छेदकत्वाभावे वह्न्यभाव-त्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेन इत्यत्र विशिष्टेत्युपादानम् अनुपपन्नम् इति वाच्यम् । दर्शितविशेष्यतायाः साक्षात्सम्बन्धेन अवच्छेदकताविरहात्; परम्परया तस्या अवच्छेदकताबोधनाय विशिष्टपदोपादानात् ।

१३. तथापि निरुक्तप्रतिबन्धकतावच्छेदकतायाः वह्न्यभावत्वावच्छिन्न विशेष्यतायामेव सत्त्वेन निरुक्तजनकतावच्छेदकताया ह्रदत्वावच्छिन्न विशेष्यतायामेव सत्त्वेन निरुक्तजनकतावच्छेदकविषयतात्वव्यापकत्वस प्रतिबन्धकतावच्छेदकतायामसत्त्वेन निरुक्तसत्प्रतिपक्षाव्याप्तेर्दुवार त्वात्, निरुक्तपरिष्कारस्य सर्वथा असंभवात् ॥

१४. नच स्वनिरूपितव्यापकत्वनिष्ठप्रकारतावच्छेदकतावच्छेदकावच्छि न्नत्वस्वनिरूपकज्ञानविशिष्टज्ञानीयत्वैतदुभयसंबन्धेन वह्न्यभाव त्वावच्छिन्नविशेष्यताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यता शालिनिश्चयत्वेन प्रतिबन्धकतास्वीकारेणोक्तविषयतात्वव्यापकत्व मुक्तावच्छेदकतायामस्त्येवेति निरुक्तपरिष्कारस्संभवत्येवेति वाच्यम्

१५. उक्तरूपेण प्रतिबन्धकत्वाङ्गीकारे, चैत्रस्य जलव्यापको वह्न्यभावः जलवान् ह्रद इति ज्ञानसत्वे मैत्रस्य केवलजलवान् ह्रद इति ज्ञानस मैत्रस्य वह्न्यनुमितिप्रतिबन्धापत्तिः, समानाकारकज्ञानेषु विषयता भेदस्याप्रामाणिकतया मैत्रज्ञानीयजलत्वावच्छिन्नप्रकारताया अ चैत्रज्ञानीयवह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टत्वात्, अतः पूर्वोक्त प्रकारेणैव प्रतिबन्धकताया वक्तव्यतयोक्ताव्याप्ति तादवस्थ्येनो परिष्कारासम्भवात् ॥

१६. नच जनकतावच्छेदकविषयतात्त्वव्यापकत्वं प्रतिबन्धकतावच्छे दकतावच्छेदकसम्बन्धघटकत्वसम्बन्धेन निवेश्यम्, अतो नाव्याप्तिः जनकतावच्छेदकपक्षविषयतायां प्रतिबन्धकतावच्छेदकतावच्छेद सम्बन्धघटकत्वसत्वात् । उक्तोभयवद्ध्रदे च नातिव्याप्तिः, वह्न्यभाव व्याप्य व्याप्यवानिति ज्ञानीयविषयताया जनकतावच्छेदिकाय प्रतिबन्धकता वच्छेदकतावच्छेदकसम्बन्धघटकत्वाभावादिति वाच्यम्

---

विवेचनी

१६) अत्र कोटी विशेषः -

जनकतावैशिष्ट्यघटकभेदप्रतियोगितावच्छेदकत्वं स्वावच्छेदकतासम्बन्धेन इ पूर्वमुक्तम्। तत्स्थाने स्वावच्छेदकतावच्छेदकसम्बन्धघटकत्व सम्बन्धो निवेशनीय

१७. तथासति साध्याभावाभाववदवृत्तिमत्पक्षाव्याप्तेः तादृश-सत्प्रतिपक्षज्ञानीयविषयतायां तादृशज्ञानीयज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिबन्धकतायाः स्वावच्छेदकतावच्छेदकसम्बन्धघटकत्वसम्बन्धे-नाभावात् ॥

१८.नच स्वावच्छेदकत्वस्वावच्छेदकतावच्छेदकसंसर्गघटकत्वान्यतर-सम्बन्धेनैव प्रतिबन्धकतायां जनकतावच्छेदकविषयतात्वव्यापकत्व-विवक्षणान्नोभयविधसत्प्रतिपक्षाव्याप्तिः, नवोक्तोभयवद्ध्रदेऽतिव्याप्ति-रिति वाच्यम् ॥

१९. एवञ्च सति जलव्यापकवह्न्यभावकालीनजलवह्न्यभाव-व्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तौ दुर्वारत्वात्, जलव्यापको वह्न्यभावः, जलवांश्च ह्रदः, वह्न्यभावव्याप्यव्याप्यव्यापको वह्न्यभावः, वह्न्यभाव-व्याप्यव्याप्यवांश्च ह्रद इत्यनयोरुभयोर्निश्चययोरेकरूपेण प्रतिबन्धक-त्वाङ्गीकारात्, निरुक्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वावच्छेद-कतावच्छेदकसम्बन्धघटकत्वसम्बन्धेन जनकतावच्छेदिकायां प्रत्येक-ज्ञानीयविषयतायामपि सत्वेन निरुक्तान्यतरसम्बन्धेन निरुक्तविषयतात्व-व्यापकप्रतिबन्धकतायाः निरुक्तोभयवद्ध्रदविषयताव्यापकत्वात्॥

२०. नच यद्रूपावच्छिन्नविषयतायां प्रतिहेतुव्यापकसाध्याभाव-समानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वं निवेश्यते । वैशिष्ट्यञ्च निरूपितत्वतादात्म्यान्यतरसम्बन्धेन, अतो नानुपदोक्तोभय-वद्ध्रदेऽतिव्याप्तिः तद्विषयतायां निरुक्तोभयसत्त्वादिति वाच्यम् ॥

---

विवेचनी

१८) अत्र कोटौ विशेषः -

भेदप्रतियोगितावच्छेदकत्वं स्वावच्छेदकत्वस्वावच्छेदकतावच्छेद-कसम्बन्धघटकत्वान्यतरसम्बन्धेन ।

२०) प्रतिहेतुव्यापक - प्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वं निवेश्यत इति ।

२१. साध्याभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः, ह्रद
वह्निधूमोभयवानित्यादौ वह्न्यभावाभाववदवृत्तिमान् धूमाभाव
वान् वह्न्यभावभाववदवृत्तिमांश्च ह्रद इति ज्ञानयोरेकविशिष्टापरत्वे
प्रतिबन्धकतया वह्न्यभावाभाववदवृत्तिमद्ध्रदविषयतायां निरुक्तोभया
भावासत्त्वात् ॥

२२. नच प्रतिहेतुव्यापकसाध्याभावत्वावच्छिन्नविषयताशालि
निश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वनिरुक्तविषयताविशिष्टा
न्यत्वोभयाभावनिवेशान्न दोष इति वाच्यम् ॥

२३. वह्न्यभावाभाववदवृत्तिव्यापको धूमाभाव इति निश्चयवैशिष्ट्या
वच्छिन्नायाः वह्न्यभावाभाववदवृत्तिमान्पक्ष इति निश्चयनिष्ठाय
प्रतिबन्धकताया अवच्छेदकत्वस्य निरुक्तविषयताविशिष्टान्यत्वस्य
उक्तसत्प्रतिपक्षविषयतायां सत्वात् तत्राव्याप्तेर्दुर्वारत्वात् ॥

---

## विवेचनी

अत्राभावप्रतियोगिकुक्षौ प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहे
विषयताविशिष्टान्यत्वप्रवेशः प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय ।
प्रतिहेतुविषयतावैशिष्ट्यघटकतया निरूपितत्त्वप्रवेशः प्रतिहेतुव्यापक
साध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षे अव्याप्तिवारणाय, तादात्म्य प्रवेश
पक्षवृत्तिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतावव्याप्तिवारणाय
ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वप्रवेशः साध्याभावाभाव
वदवृत्तिमत्पक्षसङ्ग्रहाय ।

तथा च पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकसाध्यतावच्छेदक
विशिष्टसाध्यग्रहत्वाव्यापकप्रकृतानुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबध्यतानिरूपित
प्रकृतानुमितिविरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापक
प्रतिबन्धकतावच्छेदिका सती, तद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकत
वच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका सत
प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वज्ञान
वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववती यद्रूपावच्छिन्ननिरूपकताक

२४. नच यद्धर्मावच्छिन्नप्रतिबध्यता सत्यन्तार्थः तद्धर्मावच्छिन्न-प्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्व-घटितोभयाभावस्यैव यद्रूपावच्छिन्नविषयतायां निवेशान्नोक्ताव्याप्तिः, निरुक्तसप्रतिपक्षविषयतायाः वह्निमत्ताबुद्धित्वावच्छिन्नप्रतिबध्यताघटित-सत्यन्तार्थवत्त्वेन तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैषिष्ट्या-वच्छिन्नप्रतिबन्धकतावच्छेदकत्वघटितोभयाभाववत्त्वस्याक्षतत्वादिति वाच्यम् ॥

---

विवेचनी

विषयितातद्रूपावच्छिन्नत्वम् इति लक्षणं फलितम् ।

अनुगमे विशेषस्तु- प्रतिबद्ध्यतावैशिष्ट्यम् आधेयतासम्बन्धेन, सा च स्वसेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्नविषयिताशाल्यना-हार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन इत्युक्तं पूर्वम् । तत्र स्वावच्छिन्न-विषयितायाः स्थाने स्वविशिष्टविषयता निवेशनीया । वैशिष्ट्यं च स्वावच्छिन्नत्व-स्वविशिष्टान्यत्वोभयसम्बन्धेन । स्ववैशिष्ट्यं स्वसमानकालीनप्रतिहेतुव्यापक-साध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वस्वसमानकालीनज्ञान-वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्त्वोभयसम्बन्धेन । तत्र प्रतिहेतुविषयतावैशिष्ट्यं स्वतादात्म्यस्वनिरूपितत्वान्यतरसम्बन्धेन ।

२४) तद्धर्मावच्छिन्न- घटितोभयाभावस्यैव यद्रूपावच्छिन्न विषयितायां निवेशादिति ।

तथा च पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाऽव्यापकसाध्यतावच्छेदकविशिष्टसाध्य-ग्रहत्वाऽव्यापकप्रकृतानुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपित-विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकतावच्छेदकविषयितात्वव्यापकप्रतिबन्धकता-वच्छेदिका सती, तद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावच्छेदक-विषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका सती, प्रतिहेतु-व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयिताविशिष्टान्यत्वतद्धर्मावच्छिन्न-प्रतिबद्ध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववती-यद्रूपावच्छिन्ननिरूपकताकविषयिता तद्रूपावच्छिन्नत्वम् इति लक्षणं फलितम् ।

अधुना, जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्र
नातिव्याप्तिः, तद्विषयितायां सत्यन्तार्थघटकवह्निमत्ताबुद्धित्वावच्छिन्नप्रतिबद्ध्यता
निरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्त्वस्य प्रतिहेतुव्यापकसाध्याभाव
समानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्त्वस्य च सत्त्वेन तदुभयाभावविरहात्
वह्न्यभाववह्न्यभावव्याप्य व्याप्योभयवद्ध्रदे तु, तद्विषयितायां विरोध्यनुमितिजनकता
वच्छेदकविषयितात्त्वव्यापकप्रतिबन्धकताघटितसत्यन्तदलविरहादेव नातिव्याप्तिः

केचित्तु–वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदविषयितायाम् उक्तोभयस
सत्त्वेन उभयाभावविरहात् तद्विषयिताया ग्रहणाऽसम्भवेन नातिव्याप्तिरित्याहुः ।

तच्चिन्त्यम्– वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे नोभयाभावदल
अतिव्याप्तिवारणम्, तद्विषयितायां प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतु
विषयताविशिष्टान्यत्त्वस्य सत्त्वेऽपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्व
विरहेण तद्घटितोभयाभावस्य अक्षतत्त्वात् ।

किन्तु, विरोध्यनुमितिजनकतावच्छेदकविषयितात्त्वव्यापकताघटित
सत्यन्तदलेनैव । तादृशोभयवद्ध्रदविषयितायां वह्न्यभाववद्ध्रदविषयितात्त्वे
प्रकृतानुमितिप्रतिबन्धकताननतिरिक्तवृत्तित्त्वसत्त्वेऽपि वह्न्यभाववद्ध्रदविषयिताशालि
निश्चयीयप्रतिबन्धकतायाः विरोध्यनुमितिजनकतावच्छेदकविषयितात्त्वव्यापकत्वाभा
व्यापकान्तविशेषितप्रतिबन्धकताननतिरिक्तवृत्तित्त्वस्य उभयवद्ध्रदविषयितायामसत्त्व

न चाधुना जलव्यापकेत्याद्युभयवद्ध्रदे अतिव्याप्तिवारणाय यद्रूपावच्छिन्न
विषयितायाम् उभयाभावस्य निवेशितत्त्वात् सत्यन्तघटकप्रतिबन्धकतायां विरोध्यनुमिति
जनकतावच्छेदकविषयितात्त्वव्यापकत्त्वविशेषणं त्यक्तमेवेति वाच्यम् ।

तत्परित्यागे बीजाभावात् । तथाहि– वह्न्यभाववह्न्यभावव्याप्य– व्याप्योभयवद्ध
अतिव्याप्तिवारणाय सत्यन्तघटकप्रतिबन्धकतायां स्वावच्छेदकत्त्वस्वावच्छेदकता
वच्छेदकसम्बन्धघटकत्त्वान्यतरसम्बन्धेन विरोध्यनुमितिजनकतावच्छेदकविषयितात्त्व
व्यापकत्त्वं निवेशितम् । तथाच पूर्वं सत्यन्तघटकप्रतिबन्धकतापदेन बाधनिश्चयीय
प्रतिबन्धकतामादायैव अतिव्याप्तिदानात् अधुना तस्याः प्रतिबन्धकतायाः उक्तान्यतर
सम्बन्धेन विरोध्यनुमितिजनकतावच्छेदकविषयितात्त्वव्यापकत्त्वाभावेन लक्षणघटकत्व
भावात् नोक्तोभयवद्ध्रदे अतिव्याप्तिः । साध्याभावाभाववदवृत्तिमत्पक्षत्मक
सत्प्रतिपक्षनिश्चयीयप्रतिबन्धकतायाः स्वावच्छेदकतासम्बन्धेन, व्यापकताघटित

सत्प्रतिपक्षनिश्चयीयप्रतिबन्धकतायाश्च स्वावच्छेदकतावच्छेदकसम्बन्धघटकत्त्व-सम्बन्धेन विरोध्यनुमितिजनकतावच्छेदकविषयितात्त्वव्यापकतया लक्षणघटकत्त्वात् उभयविधसत्प्रतिपक्षसङ्ग्रहश्च । तथा च व्यापकान्तविशेषणं सार्थकमेव ।

न च तथापि तन्निवेशे जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्य-व्याप्योभयवद्ध्रदे अतिव्याप्तेः तत्परित्यागो युक्त एवेति वाच्यम् ।

जलव्यापकेत्याद्युभयवद्ध्रदातिव्याप्तेः व्यापकान्तविशेषणनिवेशप्रयुक्तत्त्वाभावात्, तद्विशेषणनिवेशात् प्राक् वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे अतिव्याप्ति-दानावसरे एव जलव्यापकेत्याद्युभयवद्ध्रदे अतिव्याप्तेः सुस्थत्त्वात्, जलव्यापकेत्या-द्युभयवद्ध्रदातिव्याप्तेः व्यापकान्तनिवेशप्रयुक्तत्त्व एव तदतिव्याप्तिभिया एतद्विशेषण-परित्यागौचित्यात् ।

न च तथापि वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदातिव्याप्तिवारणाय निवेशितेन व्यापकान्तविशेषणेन जलव्यापकेत्याद्युभयवद्ध्रदे अतिव्याप्तेरवारणात् तदतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितायाम् उभयाभावस्य अवश्यं निवेशनीयतया तेनैव दलेन पूर्वोक्तवह्न्यभाव घटितोभयवद्ध्रदेऽपि अतिव्याप्तिवारणसम्भवे व्यापकान्तविशेषणं व्यर्थमेवेति वाच्यम् ।

जलव्यापकेत्याद्युभयवद्ध्रदे अतिव्याप्तिवारणाय यद्रूपावच्छिन्न विषयितायाम् उभयाभावनिवेशोत्तरं सत्यन्तघटकप्रतिबन्धकतायां व्यापकान्त विशेषणं परित्यज्य, वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदातिव्याप्तेरपि उभयाभावदलेन वारणीयतायाः ग्रन्थकृदभिमतत्वे, उभयत्र[1] उभयवद्ध्रदे अतिव्याप्तिवारणाय उभयाभावविशेषणे निवेशिते (२०कोटौ), अनतिरिक्तवृत्तित्त्वरूपावच्छेदकत्वप्रवेशनेन परिष्कृते (२८ कोटौ) च जल व्यापकेत्याद्युभयवद्ध्रदातिव्याप्तेः वारणं प्रदर्शितवतां ग्रन्थकाराणां वह्न्यभावघटितोभयवद्ध्रदातिव्याप्तेः वारणाऽप्रदर्शनेन न्यूनतापत्तेः ।

किञ्च, उभयाभावप्रतियोगिकोटौ अनतिरिक्तवृत्तित्त्वरूपस्यैव प्रतिबन्ध-कतावच्छेदकत्वस्य अग्रे निवेश्यतया वह्न्यभावघटितोभयवद्ध्रदविषयितायाञ्च ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्त्वस्याऽभावेन उभयाभावस्य सत्त्वात् उभयाभावदलेन वह्न्यभावघटितोभयवद्ध्रदाऽतिव्याप्तिवारणाऽसम्भवात् ।

---

1. वह्न्यभावघटितोभयवद्ध्रदे जलव्यापकेत्याद्युभयवद्ध्रदे चेत्यर्थः ।

यद्यपि, अधुना (२४ कोटौ) उभयाभावप्रतियोगिकोटौ प्रतिबन्धक वच्छेदकत्त्वस्य विशिष्याऽनिवेशिततया, वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान् इ निश्चय- विशिष्टस्य वह्न्यभावव्याप्यव्याप्यवान् ह्रदः इति निश्चयस वह्निमत्ताबुद्धिप्रतिबन्धकत्त्वेन वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयिताय ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता- निरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्व वह्न्यभाववह्न्यभावव्याप्यव्याप्योभय- वद्ध्रदविषयिताय वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितात्त्वेन ज्ञानवैशिष्ट्यावच्छिन्न प्रतिबन्धकतावच्छेदकत्त्वस्यापि सत्त्वात् उभयाभावदलेन वह्न्यभावघटितोभयवद्ध्र अतिव्याप्तिवारणं सम्भवति ।

तथापि, अग्रे (२८ कोटौ) वह्न्यभावाभाववदवृत्तिमद्ध्रदरूपसत्प्रतिप अव्याप्तिवारणाय अनतिरिक्तवृत्तित्त्वरूपस्यैवाऽवच्छेदकत्त्वस्य उभयाभावप्रतियोगिको निवेश्यतया तदानीम् अतिव्याप्तिः तदवस्थैव स्यात् । वह्न्यभावघटितनिरुक्तोभयवद्ध्र विषयितायां वह्न्यभाववद्ध्रदविषयितात्त्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धक तानतिरिक्तवृत्तित्त्वस्य, वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितात्त्वेन ज्ञानवैशिष्ट्यावच्छिन्न प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्त्वस्य च सत्त्वेऽपि ज्ञानवैशिष्ट्य वच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्त्वस्य असत्त्वेन तद्घटितोभया भावस्य अक्षतत्व

न च विशिष्यानतिरिक्तवृत्तित्त्वरूपस्यावच्छेदकत्वस्य निवेशे सति (२८ को अतिव्याप्तितादवस्थ्येऽपि न क्षतिः, अधुना (२४तमकोटौ) अवच्छेदकत्व विशिष्याऽनिवेशिततया स्वरूपसम्बन्धरूपमवच्छेदकत्व मादायाऽतिव्याप्तिवार सम्भवादिति वाच्यम् ।

२८तमकोटौ अनतिरिक्तवृत्तित्त्वरूपावच्छेदकत्त्वस्य निवेशेन उक्तरीत वह्न्यभावघटितोभयवद्ध्रदे अतिव्याप्तितादवस्थ्ये, तदव्यवहितोत्तर (२९) को तदतिव्याप्तितादवस्थ्यम् उपेक्ष्य स्थलान्तरे दोषान्तरमुद्भाव्य पुनः (३३ कोट व्यापकान्तविशेषणस्य परित्याज्यतया वह्न्यभावघटितोभय वद्ध्रदे अतिव्याप्तितादवस्थ आशङ्कितवतां ग्रन्थकृताम् अत्र (२८ कोटौ) वह्न्यभावघटितोभयवद्ध्रदातिव्याप अनभिमतत्त्वात् ।

एवम्, अत्र (२० कोटावेव) यद्रूपावच्छिन्नविषयितायामुभयाभावनिवेशे स सत्यन्तघटकप्रतिबन्धकतायां व्यापकान्तविशेषणपरित्यागस्य ग्रन्थकृत्सम्मतत्त्वे, अ

२५. वह्न्यभावाभाववदवृत्तिव्यापको वह्न्यभाव इति निश्चयवैशिष्ट्याव-च्छिन्नाया वह्न्यभावाभाववदवृत्तिमान् ह्रद इति ज्ञाननिष्ठायाः प्रतिबन्धक-ताया अवच्छेदकत्वस्य उक्तविषयतायां सत्त्वेनोक्तोभयाभाववत्त्वस्य तत्राभावेन उक्ताव्याप्तेर्दुर्वारत्वात् ॥

२६. नच वह्न्यभावाभाववदवृतिमान् ह्रद इति निश्चयस्य ह्रदे वह्निमत्ता-बुद्धिं प्रति ज्ञानवैशिष्ट्यानवच्छिन्नावश्यकल्पनीयप्रतिबन्धकत-यैवोपपत्तौ ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतान्तरे मानाभावेन तद्धर्मावच्छिन्नप्रतिबध्यताघटितोभयाभावस्य उक्तसत्प्रतिपक्षविषयतायां सत्त्वेन नोक्ताव्याप्तिरिति वाच्यम् ॥

---

विवेचनी

(३३ कोटौ) व्यापकताघटितसत्प्रतिपक्षमात्रे अव्याप्त्या विरोध्यनुमितिजनकता-वच्छेदकविषयितात्वव्यापकत्वविशेषणस्य परित्याज्यत्वोक्तेः विरोधाच्च । पूर्वमेव (२०कोटौ)व्यापकान्तविशेषणस्य परित्यक्तत्त्वात् ।

तथा च यद्रूपावच्छिन्नविषयितायाम् उभयाभावनिवेशोत्तरमपि अधुना (२४ कोटौ) सत्यन्तघटकप्रतिबन्धकतायां व्यापकान्तविशेषणस्य सत्त्वात्, तद्घटितसत्यन्तदलेनैव वह्न्यभावघटितोभयवद्ध्रदे अतिव्याप्तिवारणं, सत्यन्तघटकप्रतिबन्धकतापदेन उपादेयस्य बाधनिश्चयीयप्रतिबन्धकत्वस्य यत्किञ्चिद्विरोध्यनुमितिजनकतावच्छेदक-विषयितात्त्वव्यापकत्वाभावात् । अतः उभयाभावदलेन वह्न्यभावघटितोभयवद्ध्रदे अतिव्याप्तिवारणाभिधानं पूर्वापरग्रन्थानालोचन निबन्धनमेवेति दिक् ।

अनुगमे विशेषस्तु– प्रतिबद्ध्यतावैशिष्ट्यम् आधेयतास्वविशिष्टविषयता-वच्छेदकत्वोभय सम्बन्धेन । आधेयतास्वसेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्नविषयताशाल्यनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दित निश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्त्वं स्वविशिष्टप्रतिबन्धकतावत्त्वस्वावच्छेदकावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नानुमितिनिष्ठजन्यता-निरूपितजनकतवत्त्वोभयसम्बन्धेन । प्रतिबन्धकतायां स्ववैशिष्ट्यं स्वनिरूपित-त्वस्वावच्छेदकावच्छिन्नप्रति बद्ध्यतानिरूपितप्रतिबन्धकतावच्छेदक-विषयित्वावच्छिन्नानुमितिनिष्ठजन्यता निरूपितजनकताविशिष्टत्वोभयसम्बन्धेन ।

२७. 'धूमाभावाभाववदवृत्तिव्यापको वह्न्यभावः' 'धूमाभावाभाववदवृत्तिमांश्च पक्षः', घटाभावाभाववदवृत्तिव्यापको वह्न्यभाव घटाभावाभाववदवृत्तिमांश्च पक्ष इत्यादिसकलनिश्चयसाधारण्येनोक्तरीत्या वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेनैव प्रतिबन्धकताय वक्तव्यतया जलव्यापकवह्न्यभावकालीनेत्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणाय विशेष्यतावैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वघटितोभयाभाववत्त्वस्य विवक्षणीयतया तादृशप्रतिबन्धकतावच्छेदकत्वस उक्तसत्प्रतिपक्षविषयतायां सत्त्वेनोक्ताव्याप्तेर्दुर्वारत्वात् ॥

---

## विवेचनी

जनकतावैशिष्ट्यं स्वस्वेत्यादि भेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत स्वविशिष्टविशेष्यतात्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वावच्छेदकत्व स्वावच्छेदकतावच्छेदकसम्बन्धघटकत्वान्यतरसम्बन्धेन । स्वविशिष्टविषयता वच्छेदकत्वसम्बन्धे स्ववैशिष्ट्यं विषयतायां स्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपित ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्वसमानकालीनप्रतिहेतुव्यापक साध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वोभयाभावसम्बन्धे विषयतावैशिष्ट्यं स्वतादात्म्यनिरूपितत्वान्यतरसम्बन्धेन ।

२७) जलव्यापकवह्न्यभावकालीनेत्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणा विशेष्यतावैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वघटितोभयाभाववत्त्वस विवक्षणीयतयेति ।

ननु विशेष्यतावैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वघटितोभयाभाव विवक्षणेन कथं जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणम् ?

तथाहि । 'जलव्यापको वह्न्यभावः' 'जलवांश्च ह्रदः' 'शैवाल व्यापक वह्न्यभावः' 'शैवालवांश्च ह्रदः' इत्यादिनिश्चयानां स्वनिरूपितव्यापकत्वनिष्ठ प्रकारतावच्छेदकतावच्छेदकावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपकत्वस्वनिरूपकनिश्चयविशिष्टत्वोभयसम्बन्धेन वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टत्वेन एकरूपेण प्रतिबन्धकतया, तादृशप्रतिबन्धकतायाः अवच्छेदक वह्न्यभावत्वावच्छिन्नविशेष्यत्वमेव, न तु ह्रदत्वावच्छिन्नविशेष्यत्वम् । तथा

२८. नचोभयाभावप्रतियोगिकोटावनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैव निवेशान्नोक्ताव्याप्तिः, प्रत्येकज्ञानीयवह्न्यभावाभाववदवृत्तिमद्ध्रद-विषयतायाः उक्तप्रतिबन्धकतातिरिक्तवृत्तित्वेनोक्तोभयाभाववत्त्व-स्याक्षतत्वात् । जलव्यापकेत्याद्युभयवद्ध्रदे च नातिव्याप्तिः, तद्विषयतायां निरुक्तप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य निरुक्तविषयता विशिष्टान्यत्वस्य च द्वयोरेव सत्वेनोक्तोभयोभाववत्त्वस्याभावादिति वाच्यम् ॥

---

विवेचनी

'जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवान् ह्रदः इति निश्चयीयोभयवद्ध्रदविषयितायां प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण-प्रतिहेतुविषयताविशिष्टान्यत्वस्य सत्त्वेऽपि स्वनिरूपितव्यापकतानिष्ठेत्यादिसम्बन्धेन विशेष्यतावैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतायाः वह्न्यभावविषयतानिष्ठायाः विरहेण उभयवद्ध्रदविषयितायाम् उभयाभावोऽक्षत एवेति चेत् ।

उच्यते- ह्रदे वह्निमत्ताबुद्धिं प्रति जलव्यापको वह्न्यभाव इति निश्चयविशिष्टजलवान् ह्रदः इतिनिश्चयस्येव विनिगमनाविरहेण जलवान् ह्रदः इति निश्चयविशिष्टस्य जलव्यापको वह्न्यभावः इति निश्चयस्यापि प्रतिबन्धकत्वमावश्यकम्। तथा च व्यापकताप्रकारकनिश्चय विशिष्टानां नानाहेतुप्रकारकनिश्चयानां लाघवात् वह्न्यभावत्वावच्छिन्न विशेष्यता विशिष्टत्वेन एक प्रतिबन्धकतेव नानाहेतुप्रकारक-निश्चयविशिष्टानां व्यापकताप्रकारकनिश्चयानां ह्रदत्वावच्छिन्नविशेष्यताविशिष्टत्वेन एकप्रतिबन्धकतासिद्धिः निष्प्रत्यूहैव । वैशिष्ट्यं चात्र स्वनिरूपितप्रकारतावच्छेदका-वच्छिन्नावच्छेदकताकव्यापकतानिष्ठप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यता-निरूपकत्वस्वनिरूपकनिश्चयविशिष्टत्वोभयसम्बन्धेन ।

इत्थञ्च जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणाय अनेनैव सम्बन्धेन विशेष्यता वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्त्वस्य लक्षणे निवेश्यतया उभयवद्ध्रदविषयितायां तादृशावच्छेदकतायाः अक्षततया तद्घटितोभयस्यापि सत्त्वेन उभयाभावविरहादतिव्याप्तिवारणं सम्भवतीति ।

२८) अनुगमे विशेषः ।

स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्ध-

२९. अभावः प्रतियोगितासम्बन्धेन घटत्वव्यापकघटत्ववद्भेदकालीन-घटत्ववानित्यत्र घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाव-वदवृत्तिमदभावरूपसत्प्रतिपक्षेऽव्याप्तेः, तत्र हि प्रतियोगितासम्बन्धेन घटत्वव्यापकस्समवायेन घटत्ववद्भेदः प्रतियोगितासंबन्धेन घटत्व-वांश्चाभाव इति निश्चययोरेकविशिष्टापरत्वेनाभावत्वावच्छेदेन तादृश-घटत्ववत्ताबुद्धिं प्रति प्रतिबन्धकतया तादृशप्रतिबन्धकतायाश्च प्रतिहेतु-व्यापकताविशिष्टसाध्याभावनिश्चयवैशिष्ट्यावच्छिन्नतया उक्त-सत्प्रतिपक्षविषयताया निरुक्तप्रतिबन्धकतावच्छेदकत्वनिरुक्त-विषयताविशिष्टान्यत्वोभयवत्त्वात् ॥

---

विवेचनी

कतावच्छेदकत्वस्य स्थाने तादृशप्रतिबन्धकताविशिष्टत्वं निवेशनीयम् प्रतिबन्धकतावैशिष्ट्यम् आधेयतासम्बन्धेन । आधेयता च स्वसमानाधि-करणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्वसम्बन्धेन । स्वाधिकरणत्वं स्वाश्रयानाहार्याप्रामाण्यज्ञाना-नास्कन्दितनिश्चयत्वसम्बन्धेन ।

२९) घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमद्धटरूप-सत्प्रतिपक्ष इति ।

नन्वत्र घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभा विशिष्टान्तराऽघटितत्वदलविरहादेव अव्याप्तौ सम्भवन्त्यामुक्तोभयाभावदलविरहे अव्याप्त्यभिधानं कथं युज्यते? तथाहि – निरुक्तविशिष्टे घटत्वाभावाभाववदवृत्ति-मदभावरूपविशिष्टान्तरघटितत्वं वर्तते । घटत्वाभावाभाववदवृत्तिमदभावो हि अ सत्प्रतिपक्ष एव, यथा हि ह्रदो महानसीय वह्निमानित्यत्र प्रकृतानुमितिप्रतिबन्धकता-वच्छेदकविषयिताकतया; ह्रदो वह्न्यभाववान् इत्याकारकविरोध्यनुमिति-जनकतावच्छेदकविषयिताकतया च वह्न्यभावव्याप्यवद्ध्रदः सत्प्रतिपक्षः, तथा प्रकृ अभावो घटत्वाभाववान् इत्याकारकविरोध्यनुमितिजनकतावच्छेदकविषयिताकतय प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयिताकतया च घटत्वाभावव्याप्यवदभावस

३०. नच निरुक्तविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियते तस्य बाधघटितत्वेन तद्घटकस्यैव तत्कार्यकारित्वादिति वाच्यम् ॥

---

विवेचनी

सत्प्रतिपक्षरूपतायाः आवश्यकत्वादिति चेत् ।

न । विशेषाभावव्याप्यवत्तानिश्चये सामान्याभावव्याप्यवत्तानिश्चये च अननुगताऽप्रामाण्यज्ञानानामुत्तेजकत्वानुरोधेन तयोः प्रतिबन्धकताभेदस्य अनिवार्यतया, जगदीशोक्तरीत्या सत्यन्तदलविशिष्टान्तराघटितत्वदलघटकप्रतिबन्धकतयोः ऐक्यविवक्षणे सति उक्तविशिष्टे विशिष्टान्तराघटितत्वदलविरहप्रयुक्ताव्याप्तेर्वक्तुमशक्यतया उभयाभावविरहेणैवाऽव्याप्तेः ग्रन्थकृद्भिरभिधानात् ।

**३०) तस्य बाधघटितत्वेनेति ।**

तस्य घटत्वव्यापकघटत्ववद्भेदकालीनघटत्त्वाभावाभाववदवृत्तिमदभावस्य । ननु घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभावे घटकः घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभावस्तावत् प्रतियोगितासम्बन्धेन तादृशघटत्वाभावविशेषित एवाभावः । प्रकृतबाधस्तु स्वरूपसम्बन्धेन तादृशघटत्वाभावविशेषितो अभावः । तथा च नात्र सत्प्रतिपक्षे बाधस्य घटकत्वम्। न च तादृशकालीनत्वविशेषितघटत्ववत्ताबुद्धिविरोधिनः[1] घटत्वाभावाभाववदवृत्तिमदभावस्यैव निरुक्तसत्प्रतिपक्षघटकबाधत्वं सम्भवतीति वाच्यम् । साध्याभावव्याप्यवत्पक्षात्मकतया सत्प्रतिपक्षलक्षणाक्रान्तस्य बाधलक्षणेन च अनाक्रान्तस्य तस्य बाधरूपताऽसम्भवात् ।

तथासति, अग्रिमकोटौ (३१) वक्ष्यमाणस्थलान्तरेऽपि सत्प्रतिपक्षस्य अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वाभावाभाववदवृत्तिमद्धटस्य सामान्यत्वाभावाभाववदवृत्तिमद्धटरूपतादृशविशिष्टान्तरघटिततया तस्य सत्प्रतिपक्षरूपताकथनस्य ग्रन्थकृतामयुक्तत्वापातात् ।

---

1. महानसीयवह्निमत्ताबुद्धिं प्रति वह्निसामान्याभावव्याप्यवत्तानिश्चयस्येव कालीनत्वविशेषितघटत्ववत्ताबुद्धिं प्रति शुद्धघटत्वाभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वम् ।

यत्तु घटत्वव्यापकघटवद्भेदकालीनघटत्वाभावाभावस्यैव घटत्वव्यापक-घटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभावघटकबाधत्वेन ग्रन्थकृद्विवक्षितत्वे तादृशकालीनत्वविशेषितघटत्वसाध्यकस्थलानुधावनं व्यर्थम् । अभावपक्षक-शुद्धघटत्वसाध्यके घटत्वाभावाभाववदवृत्तिमदभावात्मकसत्प्रतिपक्षस्य घटत्वाभावाभावात्मकबाधघटितत्वसम्भवादिति ।

तन्न । जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयिताय निवेशितस्य उभयाभाववत्त्वदलस्य घटत्वाभावाभाववदवृत्तिमदभावरूपसत्प्रतिपक्ष-विषयितायाम् अक्षततया, शुद्धघटत्वसाध्यके निरुक्तसत्प्रतिपक्षेऽव्याप्तेः अप्रसक्तेः तस्यां सत्प्रतिपक्षविषयितायां सत्यन्तघटकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतानतिरिक्त वृत्तित्वविरहेण तदघटितोभयविरहात् । निरुक्तकालीनत्व-विशेषितघटत्व साध्यके तु घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्ति-मदभावरूपसत्प्रतिपक्षविषयितायां तदुभयस्य अक्षततया उभयाभावविरहे अव्याप्तिप्रसक्तेः, निरुक्तकालीनत्वविशेषितघटत्वसाध्यकस्थलानुधावनसार्थक्यादि चेत् ।

सत्यम्, घटत्वव्यापकेत्याद्यात्मकस्य निरुक्तविशिष्टस्य बाधघटितत्वं नास्त्येव प्रकृते बाधस्य किञ्चित् सम्बन्धेन घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभाव विशिष्टाभावात्मकतया, दर्शितसत्प्रतिपक्षे च किञ्चित् सम्बन्धेन घटत्वव्यापकघटत्व वद्भेदकालीनघटत्वाभावविशिष्टाभावस्य घटकतया सत्प्रतिपक्षस्य बाधघटितत्वमि आपातत एव तदभिधानात् न तद्ग्रन्थाऽसंगतिः । स्थलान्तरे अव्याप्तेः अवतार एव ग्रन्थकृत्तात्पर्यात् ।

न चैवं सति अत्रैवाव्याप्तेरपरिहारात् स्थलान्तरानुधावनमफलमिति वाच्य उभयाभावप्रतियोगिकुक्षौ स्वरूप सम्बन्धरूपस्यापि प्रतिबन्धकतावच्छेदकत्वस विवक्षणेन घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभावे अव्याप्ते वारणे सति वक्ष्यमाणस्थलान्तरे अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्य त्वाभावाभाववदवृत्तिमद्धटे ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितोभयविधाव च्छेदकतावद् विषयिताके सत्प्रतिपक्षे अव्याप्तिप्रसक्त्या स्थलान्तरानुधावनसाफल्या

अथवा मूले बाधपदं प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत प्रकृतपक्षप्रकृतसाध्यग्रहाऽविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रह

विरोधीत्यर्थकम्[1]। तथाच घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभाव एव निरुक्तसत्प्रतिपक्षघटकत्वेन विवक्षितो बाधः । तन्निश्चयस्य घटत्ववत्ताबुद्धिं प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धक तावत्तया, सामानाधिकरण्यानवगाहित्वेन विरोध्यनुमितिजनकताशून्यतया च, तद्विषयितायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वात् विरोध्यनुमिति जनकतानवच्छेदकत्वाच्चेति न काप्यसङ्गतिः ।

नचैवं सति बाधपदस्य मुख्यार्थपरत्वमेव । निरुक्तविशिष्टघटकस्य प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षस्य बाधरूपत्वात् । तथाहि- ह्रदो वह्निमान् इत्यत्र जलव्यापकवह्न्यभावकालीनजलवद्ध्रदस्य बाधरूपत्वमावश्यकम् । प्रकृतानुमितिनिरूपितविरोधितावतः सत्प्रतिपक्षलक्षणाऽनाक्रान्तस्य तस्य बाधलक्षणाक्रान्तत्वात् । एवं ह्रदो महानसीय वह्निमान् इत्यत्रापि तस्य बाधरूपता सम्भवति। तथा च प्रकृते शुद्धघटत्वसाध्यके इव घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वस्य साध्यतायां घटत्वव्यापकघटवद्भेदकालीनघटत्वाभावस्य बाधरूपत्वमेव इति वाच्यम्।

कालीनत्वघटितदर्शितविशिष्टानां दोषत्वाभावेन बाधरूपतायाः उपगन्तुमशक्यत्वात् । तेषु प्रामाणिकानां दोषव्यवहाराभावात् । तेषां दोषत्वोपगमे, जलव्यापकवह्न्यभाववद्वृत्तिघटवद्भूतलकालीनजलवद्ध्रदादीनामपि दोषत्वप्रसंगाच्च । तदनुरोधेन बाधलक्षणस्य दर्शितविशिष्टव्यावृत्ततासम्पादकस्य परिष्कारान्तरस्य अनुसरणीयत्वात्।

एतेन, दोषसामान्यलक्षणे इव बाधलक्षणे वह्न्यभाववद्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तेः वारणाय विशिष्टद्वयाघटितत्वस्य निवेश्यतया ह्रदो वह्निमान् इत्यत्र जलव्यापकवह्न्यभावकालीनजलवद्ध्रदस्यापि विशिष्टद्वय घटितत्वेन न बाधरूपता सम्भवति । तथा च निरुक्तकालीनत्वविशिष्टघटत्वसाध्यके घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावस्यापि विशिष्टद्वयघटितत्वात् न बाधरूपत्वम् इति परास्तम् ।

घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावस्य वस्तुतः बाधत्वाभावेऽपि प्रकृतबाधपदेन विवक्षणसम्भवात् । यथाश्रुत(बाध) दीधित्यनुसारात्। अत्रैव कोटौ(३०) तद्घटकस्यैव तत्कार्यकारित्वात् इति ग्रन्थकृत् कथनस्वारस्याच्च । सत्प्रतिपक्षस्य कार्यं हि प्रकृतानुमितिप्रतिबन्धः तद्घटकेन घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावेन अबाधेनापि क्रियत एव ।

---

1. बाधदीधित्यनुरोधात् ।

३१. अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यक-घटादिपक्षकस्थले समवायसम्बन्धस्य व्याप्यताघटकत्वे अभावविशिष्ट-व्यापकसामान्यत्वाभावकालीनसामान्यत्वाभावाभाववदवृत्तिमद् घट-रूपसत्प्रति पक्षेऽव्याप्तेः, तत्र हि अभावविशिष्टव्यापकस्सामान्य-त्वाभावः अभावविशिष्टवांश्च घट इति ज्ञानयोरेकविशिष्टापरत्वेन प्रतिबन्धकतया निरुक्तसत्प्रतिपक्षविषयतायानिरुक्तप्रतिबन्धक-तानतिरिक्तवृत्तित्वनिरुक्तविषयताविशिष्टान्यत्वोभयवत्त्वात्, व्यापकता-घटितस्यैवास्यापि सत्प्रतिपक्षरूपताया आवश्यकत्वात् ॥

---

## विवेचनी

केचित्तु- अत्र बाधपदेन घटत्वव्यापकघटत्ववद्भेद एव ग्राह्यः । तस्य बाधत्वं तु इत्थम्- प्रतियोगितासम्बन्धेन घटत्वं प्रति समवायेन घटत्ववद्भेदस्य व्यापकत्वं नाम घटत्वाभावस्य समवायेन घटत्ववद्भेदकत्वम् । अभावत्त्वावच्छेदेन समवायेन घटत्ववत्ताज्ञानं प्रति घटत्वाभावे घटत्ववद्भेदज्ञानं प्रतिबन्धकं, विषयविरोधात् न च भिन्नाकारकस्य 'घटत्वव्यापको घटत्ववद्भेद इति निश्चयस्य कथं प्रतिबन्धकत्व-मिति वाच्यम् ।

घट आकाशवानित्यादिबद्धिं प्रति वृत्तिमदभावाप्रतियोगी आकाशाभाव इति निश्चयस्येव अस्यापि प्रतिबन्धकत्वस्येष्टत्वादिति वदन्ति ।

अत्रेदं चिन्त्यते- अभावत्वधर्मितावच्छेदककघटत्ववत्ताबुद्धिं प्रति घटत्वव्यापको घटत्ववद्भेदः इति निश्चयस्य विषयविरोधमात्रेण प्रतिबन्धकतोपगमे, घटत्वधर्मिता-वच्छेदककसामान्यत्ववत्ताबुद्धिं प्रति अभावविशिष्टव्यापकः सामान्यत्वाभाव इत्याकारकस्य अभावविशिष्टत्वेन घटत्वमवगाह्य तद्व्यापकतां सामान्यत्वाभावे अवगाहमानस्य निश्चयस्य प्रतिबन्धकता प्रसङ्गः, विषयविरोधस्य तुल्यत्वात् । चेष्टापत्तिः । तथा सति, तत्रापि अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्य-त्वाभावाभाववदवृत्तिमद्धटात्मकसत्प्रतिपक्षस्य अभावविशिष्टव्यापकसामान्यत्वा-भावात्मकबाधघटिततया स्थलान्तरानुसरणासङ्गतेः दुष्परिहरत्वात् ।

'वृत्तिमदत्यन्ताभावाप्रतियोगी आकाशाभाव इति निश्चयस्य असमाना-कारकस्य विरोधित्वं तु, 'सामान्यघटितविशेषाभावग्रहस्य यत्र प्रतिबन्धकत्वं त

३२. नच प्रतिहेतुव्यापकताविशिष्टसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नविषयता शालिनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्योभयाभावप्रतियोगितया निवेशान्नाव्याप्तिरिति वाच्यम् ॥

३३. तत्रैव पृथिवीत्वव्यापकसामान्यत्वाभावकालीनपृथिवीत्वसामान्यत्वाभावव्याप्यव्याप्योभयवद् घटादावतिव्याप्तेः, तद्विषयतायाः प्रतिहेतु व्यापकताविशिष्टसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नविषयताशालिनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वविरहेण निरुक्तोभयाभाववत्त्वात् । अतः प्रतिहेतुव्यापकसाध्यतावच्छेद कावच्छिन्नाभावत्वावच्छिन्नविषयताशालिनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य उभयाभावप्रतियोगितया निवेशनीयतयोक्ताव्याप्तितादवस्थ्यात्, उक्तोभयाभाववत्त्वस्य यद्रूपावच्छिन्नविषयतायां निवेशासम्भवेन जलव्यापकेत्युक्तोभयवद्ध्रदेऽतिव्याप्तेर्दुर्वारतया अवच्छेदककोटिप्रविष्टानामवच्छेदकत्वाङ्गीकारे च व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिसम्भवेन निरुक्तपरिष्कारासम्भवेन वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारा ॥

---

## विवेचनी

सामान्याभावग्रहस्यापि प्रतिबन्धकत्वम् इति रीत्या । स्पष्टं चैतत् सव्यभिचारगादाधर्याम्। प्रकृते घटत्वव्यापकतानिश्चयस्य तु तथा प्रतिबन्धकत्वं दुरुपपादमेवेति ।

३३) अवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वाङ्गीकारे च व्यापकताघटितसत्प्रतिपक्षमात्रे अव्याप्तिसम्भवेन निरुक्तपरिष्काराऽसम्भवेनेति।

ननु अवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वाङ्गीकारपक्षे व्यापकताघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय विरोध्यनुमिति जनकतावच्छेदकमुख्यविशेष्यितात्वमेव विरोध्यनुमितिजनकतावच्छेदकविषयितात्वस्थाने निवेशनीयमित्युक्तम् (१०कोटौ )। तथा च विरोध्यनुमितिजनकतावच्छेदकमुख्यविशेष्यितात्वव्यापकावच्छेदकताकत्वस्य व्यापकताघटितसत्प्रतिपक्षनिश्चयीयज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां सत्त्वेन

नाऽव्याप्तिप्रसक्तिरिति चेत् ।

अत्रोच्यते– यद्रूपावच्छिन्नविषयितायाम् उभयाभावस्य परित्यागे सति, सत्यन्तदले उक्तरीत्या मुख्यविशेष्यितात्वनिवेशो न सम्भवति । तथासति जलव्यापकवह्न्यभाव-कालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिप्रसङ्गात् । तथाहि-अनुपदोक्तसत्प्रतिपक्षेऽव्याप्ति प्रसंगेन यद्रूपावच्छिन्नविषयितायाम् उभयाभावस्य परित्यक्ततया, जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिः विशेष्यदलेन सत्यन्तदलेन वा वारणीया । तत्र च विषयितात्वस्य स्थाने मुख्यविशेष्यितात्त्वस्य प्रवेशने जलव्यापके-त्याद्युभयवद्ध्रदेऽतिव्याप्तिवारणं दुश्शकम् । जलव्यापकवह्न्यभावसमानाधिकरण-जलवान् ह्रदः इति निश्चयीया या अनुमितिजनकता, तदवच्छेदक मुख्यविशेष्यितात्वस्य तज्ज्ञानीयह्रदविषयितायामेव सत्त्वात्, तत्र च जलव्यापको वह्न्यभाव इति निश्चयविशिष्ट-जलवान् ह्रद इति निश्चयत्वावच्छिन्नप्रतिबन्धकतायाः उभयवद्ध्रदविषयकनिश्चयनिष्ठाया अवच्छेदकत्वस्य सत्त्वात् ।

विषयितात्वमात्रप्रवेशने तु निरुक्ता या जनकता, तदवच्छेदकविषयितात्वस्य सामानाधिकरण्यविषयितायां सत्त्वात् तत्र दर्शितप्रतिबन्धकतावच्छेदकत्वस्य विरहात् उभयवद्ध्रदनिश्चयीयप्रतिबन्धकतायाः लक्षण घटकत्वाऽसम्भवात् नातिव्याप्तिः ।

इत्थञ्चाऽवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वपक्षे, व्यापकताघटित-सत्प्रतिपक्षनिश्चयीयप्रतिबन्धकतावच्छेदकतायां सत्प्रतिपक्षनिश्चयीयजनकतावच्छेदक-विषयितात्वव्यापकताविरहेण व्यापकताघटितसत्प्रतिपक्षमात्रे अव्याप्तिः दुर्वारैवेति सत्यन्तघटकप्रतिबन्धकतायां विरोध्यनुमितिजनकतावच्छेदकविषयितात्वव्यापका-वच्छेदकताकत्वघटितपरिष्कारो न सम्भवतीत्याशयः ।

न च जलशैवालादिनानाहेतुकनानानिश्चयानाम् अननुगतजनकतापक्षे अवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वे व्यापकताघटितसत्प्रतिपक्षे अव्याप्ति-प्रसक्तावपि, तेषां निश्चयानाम् अनुगतजनकतापक्षे नाऽव्याप्ति प्रसक्तिः । तथाहि-जनकताप्रतिबन्धकतयोः अनुगमपक्षे विरोध्यनुमितिजनकतावच्छेदकविषयितात्व-व्यापकत्वमेव प्रतिबन्धकतायां निवेशितम् । व्यापकताघटकसम्बन्धश्च स्वावच्छेदकता-वच्छेदकसम्बन्धघटकत्वस्वावच्छेदकत्वान्यतरः । जलव्यापकवह्न्यभावसमानाधिकरण-जलवान् ह्रदः इत्याकारकसत्प्रतिपक्षनिश्चयनिष्ठा या किञ्चिद्धर्मविशिष्टविषयता-निरूपितह्रदत्वावच्छिन्नविशेष्यतारूपानुगतधर्मावच्छिन्नजनकता, तदवच्छेदकविषयितात्

३४. नच विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकताव्यापकत्वं सत्यन्तघटकप्रतिबन्धकतायां निवेश्यम्, तथाच स्वनिरूपितप्रतिबन्धक-

---

विवेचनी

नानाहेतुकसत्प्रतिपक्षनिश्चयीयायां जलादि विषयितायां ह्रदविषयितायां च भवति । तत्र, सत्प्रतिपक्षनिश्चयनिष्ठा वह्न्यभावत्वावच्छिन्नविशेष्यतारूपानुगतधर्मावच्छिन्ना प्रतिबन्धकता स्वावच्छेदकतावच्छेदकसम्बन्धघटकत्वसम्बन्धेन अस्त्येवेति व्यापकता-घटितसत्प्रतिपक्षनिश्चयीयप्रतिबन्धकतायां विरोध्यनुमितिजनकतावच्छेद-कविषयितात्वव्यापकत्वसम्भवात् अवच्छेदककोटिप्रविष्टानाम् अवच्छेदकत्वेऽपि मुख्यविशेष्यितात्वनिवेशं विनैव व्यापकताघटितसत्प्रतिपक्षे समन्वयो भवति । तथा च विरोध्यनुमिति जनकतावच्छेदकविषयितात्व व्यापकत्वं निवेश्योक्तपरिष्कारे न दोषः। न च अनुगतजनकतापक्षे जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्य-व्याप्योभयवद्ध्रदे अतिव्याप्तिरेव एतत्परिष्कारे दोष इति शंक्यम् । विरोध्यनुमिति जनकतावच्छेदकविषयितात्वव्यापकत्वदलाऽनिवेशेऽपि जलव्यापकेत्याद्युभय-वद्ध्रदेऽतिव्याप्तितादवस्थ्येन तदतिव्याप्तेः एतत्परिष्कारपरित्यागबीजत्वाऽसम्भवादिति वाच्यम् ।

अननुगताऽप्रामाण्यज्ञानानाम् उत्तेजकत्वानुरोधेन नानाहेतुकसत्प्रतिपक्ष-निश्चयानाम् अगत्या नानाजनकतास्वीकारस्य आवश्यकतया, अनुगतजनकतापक्षस्य अप्रामाणिकत्वमित्यभिप्रायात् ।

वस्तुतस्तु अनुगमपक्षेऽपि सम्बन्धभेदेन जनकताभेदात्, वृत्तित्वं तादात्म्य-सम्बन्धावच्छिन्नत्वाभाववत् इत्यत्र तादात्म्येन तद्व्यक्तेः प्रतिहेतुतायां व्यापकताघटित-सत्प्रतिपक्षेऽव्याप्तिः दुर्वारैव । तन्निश्चयीयजनकतायाः प्रतिहेत्वन्तरघटितसत्प्रतिपक्ष-निश्चयव्यावृत्तायाः अवच्छेदकीभूतायां सामानाधिकरण्यघटकाऽधिकरणविषयितायां प्रतिबन्धकतावच्छेदकतायाः विरहात् । विषयितात्वस्य स्थाने मुख्यविशेष्यितात्वनिवेशस्य तु तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वकालीनतद्व्यक्तितादात्म्यसम्बन्धा-वच्छिन्नत्वव्याप्यव्याप्योभयवद्वृत्तित्वे अतिव्याप्तिभिया असम्भवात् ।

३४) विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकतव्यापकत्वं निवेश्यमिति। तथा च विरोध्यनुमितिजनकतावच्छेदकविषयितात्वव्यापकत्वविशेषणं,

तावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावत्त्वस्वविशिष्टप्रतिबन्धकतावत्त्वैतदुभयसम्बन्धस्यैव पूर्वोक्तभेदप्रतियोगितावच्छेदकतावच्छेदकत्वात् । स्वविशिष्टत्वञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्टत्वस्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितत्वोभयसम्बन्धेन । जनकतावैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । अवच्छेदकता च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । विशेष्यदळं तु जलव्यापकवह्न्यभावकालीनजलदध्रदेऽतिव्याप्तिवारणाय । तथाच वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे नातिव्याप्तिः, तत्र बाधप्रतिबन्धकतायास्तज्ज्ञाननिष्ठजनकताव्यापकत्वाभावादिति वाच्यम् ॥

३५. ह्रदो वह्निमानित्यत्रैव जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तेः, तज्ज्ञाननिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः सत्प्रतिपक्षज्ञानीयजनकताव्यापकत्वात् । निरुक्तोभयवद्ध्रदविषयतायाः तदवच्छेदकत्वविरोध्यनुमितिजनकतावच्छेदकत्वोभयवत्त्वात् ॥

---

## विवेचनी

पूर्वोक्तोभयाभावविशेषणं च न निवेश्यते । वह्न्यभावेत्याद्युभयवद्ध्रदातिव्याप्तिः निरुक्तजनकताव्यापकत्वविशेषणेन वार्यते । जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिस्जनकतैक्यविवक्षणेन अनुपदमेव वारयिष्यते ।

नातिव्याप्तिरिति । पूर्वोक्तघटपक्षके अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वाभावाभाववदवृत्तिमद्धटे, अभावपक्षके घटत्व व्यापकेत्यादिरूपे च सत्प्रतिपनाऽव्याप्तिः । तत्तन्निश्चीयप्रतिबन्धकतायाः विरोध्यनुमितिनिरूपिततत्तत्सत्प्रतिपक्षनिश्चयीयजनकताव्यापकत्वात्, यद्रूपाऽवच्छिन्नविषयितायाम् उभयाभाव विशेषणस्त्यक्तत्वात् इत्यपि ज्ञेयम् ।

३५) ह्रदो वह्निमानित्यत्रैव जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तेरिति ।

३६. नच यज्जनकताव्यापकत्वं प्रतिबन्धकतायाः तज्जनकतावच्छेदकत्व-विवक्षणान्नातिव्याप्तिः, नच यत्त्वतत्त्वनिवेशादननुगम इति वाच्यम् । स्वनिरूपितप्रतिबन्धकतावत्त्वस्वविशिष्टजनकतावत्त्वैतदुभयसम्बन्ध-स्यैव उक्तभेदप्रतियोगितावच्छेदकत्वघटकत्वात् । स्ववैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावृत्तित्वस्वावच्छेदकावच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यता-निरूपितत्वोभयसम्बन्धेन । प्रतिबन्धकतावृत्तित्वञ्च स्वनिष्ठा-वच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वनिष्ठावच्छेदकता-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । तथाच नोक्तोभयवद्धदेऽतिव्याप्तिः, तज्ज्ञानीयविषयताया निरुक्तज्ञानवैशिष्ट्या-वच्छिन्नप्रतिबन्धकतावृत्तिजनकतावच्छेदकत्वविरहादिति वाच्यम् ॥

३७. जलं वृत्तित्वाभाववदित्यत्र जलव्यापकवृत्तित्वव्याप्यसमाना-धिकरणजलवज्जलेऽतिव्याप्तेः, सत्प्रतिपक्षोन्नायकज्ञानीयजनकता-व्यापकत्वस्य तत्स्थलीयबाधज्ञानप्रतिबन्धकतायां सत्त्वेन तादृशप्रति-बन्धकत्वजनकत्वोभयावच्छेदकत्वस्य निरुक्तविशिष्टविषयतायां सत्वात्॥

३८. नच जलव्यापकवृत्तित्वव्याप्यसमानाधिकरणजलवज्जलं, शैवालव्यापकवृत्तित्वव्याप्यसमानाधिकरणशैवालवज्जलमित्यादिसकल-निश्चयसाधारण्येन जनकताया लाघवानुरोधेन स्वीकरणीयतया तादृशजनकताव्यापकत्वस्य उक्तस्थलीयबाधप्रतिबन्धकतायामसत्त्वेन नोक्तातिव्याप्तिरिति वाच्यम् ॥

---

विवेचनी

इदमुपलक्षणम् । उक्तघटपक्षके पृथिवीत्वव्यापकसामान्यत्वाभावकालीन-पृथिवीत्वसामान्यत्वाभावव्याप्यव्याप्योभयवद्धटेऽतिव्याप्तिः । पृथिवीत्वव्यापक-सामान्यत्वाभावसमानाधिकरणपृथिवीत्ववान् घटः इति निश्चयीया या विरोध्यनुमिति-जनकता तद्व्यापकतायाः निरुक्तोभयवद्घटनिश्चयीयप्रतिबन्धकतायां ज्ञानवैशिष्ट्य-वच्छिन्नायाम् अक्षततया तामादाय लक्षणसमन्वयसम्भवात् । जनकतैक्यविवक्षणेन तु इयमप्यतिव्याप्तिर्वार्यते ।

३९. वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र तादात्म्यसम्बन्धेन तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्य-सम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वरूपे सत्प्रतिपक्षोन्नायकेऽति-व्याप्तेः, अनुगतरूपेण जनकत्वाङ्गीकारेऽपि सम्बन्धभेदेन जनकताय भिन्नतया तादात्म्यसम्बन्धावच्छिन्नवृत्तित्वविषयताघटिततद्धर्मावच्छिन्न-जनकताव्यापकत्वस्य उक्तस्थलीयबाधज्ञान प्रतिबन्धकतायां सत्त्वात्।
४०. नच प्रतिबन्धकतानिरूपितानतिरिक्तवृत्तित्वस्वरूपसम्बन्ध-रूपोभयविधावच्छेदकत्वस्य यद्रूपावच्छिन्नविषयतायां निवेशान्नोक्ताति-व्याप्तिः, निरुक्तसत्प्रतिपक्षोन्नायकविषयतायां बाधाज्ञानप्रतिबन्धकता-निरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहात् । नचैकत्रद्वयमिति रीत्य

---

विवेचनी

४०) प्रतिबन्धकतानिरूपित......निवेशान्नोक्तातिव्याप्तिरिति ।

अनुगमे विशेषः – आधेयत्वसामानाधिकरण्यसम्बन्धाभ्यां प्रतिबध्यतावैशिष्ट्यम् आधेयत्वं स्वसेत्यादिसम्बन्धेन । तत्र भेदप्रतियोगितावच्छेदकत्वं ३६ तमकोटा-वुक्तसम्बन्धेन । सामानाधिकरण्यघटकं स्वाधिकरणत्वं स्वनिरूपितप्रतिबन्धकतात्व सम्बन्धेन । वृत्तित्वं स्वावच्छिन्नविषयत्वावच्छिन्नत्वसम्बन्धेन ।

**यद्रूपावच्छिन्नविषयतासामान्ये उक्तप्रतिबन्धकतानिरूपितस्वरूप सम्बन्धरूपावच्छेदकत्वविवक्षणेनैति ।**

अत्रानुगमेऽयं विशेषः– प्रतिबध्यतावैशिष्ट्यम् आधेयत्वाधेयत्वोभयसम्बन्धेन[1] प्रथमाधेयता पूर्ववत् । द्वितीयाधेयता स्वसमानेत्यादिभेदवत्वसम्बन्धेन । स्वाधिकरण स्वावच्छिन्नविषयतात्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वनिरूपित प्रतिबन्धकतावच्छेदकत्वसम्बन्धेन ।

---

1. अथवा प्रतिबद्ध्यतावैशिष्ट्यम् आधेयतासम्बन्धेन । सा च स्वसेत्यादिभेदवत सम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्ननिरूपकताकविषयितात्वसम्बन्धेन भेदप्रतियोगितावच्छेदकता च आधेयता सम्बन्धेन । आधेयता च स्वविशिष्टजनकत विशिष्टत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं जनकतायां स्वसमानेत्यादिभेदवत स्वविशिष्टप्रतिबन्धकताविशिष्टत्वोभयसम्बन्धेन । तत्र द्वितीये प्रतिबन्धकताय

साध्याभावतद्व्याप्यव्याप्योभयावगाहिज्ञानीयविषयतायाः प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वात्तत्रातिव्याप्तिर्दुर्वारैवेति वाच्यम्।

यद्रूपावच्छिन्नविषयतासामान्ये उक्तप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षणेनोक्तातिव्याप्तिवारणादिति वाच्यम् ॥

४१. तथापि तादृशस्थले साध्याभावसाध्याभावव्याप्यव्याप्योभयत्पक्षेऽतिव्याप्ते दुर्वारत्वात् । तद्विषयतासामान्यस्यैवोक्तप्रतिबन्धकतानतिरिक्तवृत्तित्वस्वरूपसम्बन्धरूपोभयविधावच्छेदकत्ववत्वात् । उक्तरीत्या निरुक्तविशिष्टांतराघटितत्वस्यापि सत्वात् ॥

---

विवेचनी

४१. तथापि तादृशस्थले साध्याभावसाध्याभावव्याप्यव्याप्योभयवत्पक्षेऽतिव्याप्तेः दुर्वारत्वादिति ।

विरोध्यनुमितिनिरूपितयत्किञ्चिद्यज्जनकताव्यापकप्रकृतानुमितिप्रतिबन्धकतायाः अनतिरिक्तवृत्ति अवच्छेदकं च सत् विरोध्यनुमितिनिरूपिततज्जनकतानतिरिक्तवृत्ति यद्रूपावच्छिन्नविषयितासामान्यं तद्रूपवत्त्वम् इति परिष्कृतस्य लक्षणस्य साध्याभावसाध्याभावव्याप्यव्याप्योभयवत्पक्षे ऽतिव्याप्तिः अत्र कोटौ ग्रन्थकृताम् अभिप्रेता ।

अत्रेदं चिन्त्यते । ह्रदो वह्निमान् इत्यत्र तावत् न वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिस्सम्भवति । तादृशोभयवद्ध्रदेऽतिव्याप्तिवारणायैव सत्यन्तदले जनकताव्यापकताविशेषणस्य प्रतिबन्धकतायां निवेशिततया, उक्तोभयवद्ध्रदविषयकनिश्चयनिष्ठायां बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां विरोध्यनुमितिजनकताव्यापकताविरहेण सत्यन्तदलेनैव उभयवद्ध्रदविषयितायाः वारणात् ।

---

स्ववैशिष्ट्यं स्वावच्छिन्नत्व-स्वसमानेत्यादिभेदवत्वोभयसम्बन्धेन । प्रतिबन्धकतावैशिष्ट्यं च जनकतायाम् आधेयतासम्बन्धेन । आधेयता च स्वसमानेत्यादिभेदवत्वसम्बन्धेन । जनकतावैशिष्ट्यं च स्वविशिष्टप्रतिबन्धकतानिरूपितत्व-आधेयतोभयसम्बन्धेन । तत्र स्ववैशिष्ट्यं स्वसमानेत्यादिभेदवत्व सम्बन्धेन । आधेयता च स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितत्वसम्बन्धेन ।

न च वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्रसत्प्रतिपक्षोन्नायकेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपस्यापि प्रतिबन्धकतावच्छेदकत्वस्य विवक्षिततया प्रतिबन्धकताया जनकताव्यापकताविशेषणं त्यक्तमेवेति वाच्यम् ।

तत्परित्यागे बीजाभावात् । यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपावच्छेदकत्वस्य विवक्षणेन उभयवद्ध्रदाऽतिव्याप्तेः प्रतीकाराऽसम्भवात् उभयवद्ध्रदविषयितासामान्ये स्वरूपसम्बन्धरूपावच्छेदकतायाः अपि अक्षतत्वात् ।

नापि वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र तादात्म्यसम्बन्धावच्छिन्नत्वतद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तद्व्यक्त्युभयवद्वृत्तित्वेऽतिव्याप्तिसम्भवः ।

तद्विषयितासामान्ये विरोध्यनुमितिजनकताव्यापकप्रकृतानुमितिप्रतिबन्धकताया उभयविधावच्छेदकत्वस्य सत्त्वेऽपि तत्र विशिष्टान्तराऽघटितत्व दलविरहात् । तस्य तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यव- न्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तद्व्यक्तिमद्वृत्तित्वरूपविशिष्टाऽन्तरेण घटितत्वादिति चेत् ।

अत्रोच्यते- वृत्तित्वपक्षक एवोक्तोभयवद्वृत्तित्वेऽतिव्याप्तिस्सम्भवति । तथाहि- वृत्तित्वपक्षकदर्शितस्थले तादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यव्याप्यस्य तादात्म्ये प्रतिहेतुतायां व्यापकताघटितसत्प्रतिपक्षे तादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यव्याप्यव्यापकतादात्म्यसम्बन्धावच्छिन्नत्ववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यव्याप्यवद्वृत्तित्वे तादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यव्याप्यवद्वृत्तित्वरूपविशिष्टान्तरेण घटितेऽव्याप्तिवारणाय[1] विशिष्टान्तराऽघटितत्वशरीरघटकविशिष्टान्तरविषयिताया प्रकृतानुमितिप्रतिबन्धकता निरूपितं स्वरूपसम्बन्धरूपमवच्छेदकत्वमपि निवेशनीयम्

1. स्वरूपसम्बन्धरूपस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य तादात्म्यसम्बन्धावच्छिन्नवृत्तित्व विषयितायां सत्वेऽपि तदनात्मिकाया तादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तादात्म्यसम्बन्धावच्छिन्नत्वव्याप्य व्याप्यवद्वृतित्वविषयितायां विरहेण, अस्याः विशिष्टान्तरविष्यितात्वेन ग्रहणाऽसम्भवा विपरीतसत्प्रतिपक्षादि विषयिताया एव ग्राह्यतया अव्याप्तिवारणं बोध्यम् ।

४२. नच स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्रूपावच्छिन्नविषयकत्वाऽव्यापकत्वस्य जनकतायां निवेशान्नोक्तातिव्याप्तयः, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसाध्याभावव्याप्यव्याप्यवत्पक्षतावच्छेदकावच्छिन्नविषयकत्वाऽव्यापकत्वस्य निरुक्तविशिष्टविषयताव्यापकजनकतायामभावादिति वाच्यम् ॥

---

## विवेचनी

तथा च वृत्तित्वपक्षके तद्व्यक्तिप्रतिहेतुके तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तद्व्यक्तिमद्वृत्तित्वस्य परिष्कृतविशिष्टान्तरत्वं न सम्भवति, तद्विषयितायां स्वरूपसम्बन्धरूपस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य विरहात् । इत्थं च निरुक्तोभयवद्वृत्तित्वस्य विशिष्टान्तराऽघटितत्वमक्षतमेव । पूर्वोक्तरीत्या तद्विषयितायां जनकताव्यापकताघटितसत्यन्तदलं, विशेष्यदलं चाक्षतमिति ।

४२) नोक्तातिव्याप्तय इति ।

ननु सत्यन्तघटकप्रतिबन्धकतायां निवेशितं यद् विरोध्यनुमिति जनकताव्यापकत्वं, तत्र जनकतायां विशिष्टान्तरविषयिताऽव्यापकत्वविशेषणनिवेशेनोक्तोभयवद्वृत्तित्वेऽतिव्याप्तेर्वारणेऽप्यनुपदोक्तसत्प्रतिपक्षोन्नाकद्वया[1]तिव्याप्तेर्न वारणसम्भवः । उक्तसत्प्रतिपक्षोन्नायकनिश्चयीय जनकतयोः विशिष्टान्तरविषयिताव्यापकताविरहात् । तथा च 'नोक्ताति व्याप्तयः इत्यसङ्गतम् इति चेत् ।

न । निरुक्तोभयवद्वृत्तित्वेऽतिव्याप्तेर्वारणाय विशिष्टान्तरविषयिताऽव्यापकत्वस्य विशेष्यदलघटकजनकतायामेव विवक्षणीयत्वात् । तेनैव जलव्यापकेत्याद्युभयवद्ध्रदे वह्न्यभावेत्याद्युभयवद्ध्रदे चातिव्याप्तेर्वारणेन सत्यन्तदले प्रतिबन्धकतायां जनकताव्यापकताया अनिवेश्यतया लाघवात् । किन्तु, वृत्तित्वादिपक्षके दर्शितोन्नायकातिव्याप्तेर्वारणाय पूर्वोक्तं यद्रूपाव च्छिन्नविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षणं तु आवश्यकमेव ।

---

1. जलव्यापकवृत्तित्वव्याप्यसमानाधिकरणजलवज्जलं, तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तद्व्यक्तिमद्वृत्तित्वञ्च ।

न च यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपावच्छेदकत्वस्य विवक्षणे अनुगतजनकतापक्षे व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिः । तत्पक्षे जलशैवालादिना-नाहेतुकसत्प्रतिपक्षनिश्चयानां निरुक्तपरम्परासम्बन्धेन वह्न्यभावत्वावच्छिन्न-विशेष्यताविशिष्टत्वेनैव प्रतिबन्धकतास्वीकारेण वह्न्यभावत्वावच्छिन्नविषयताया एव प्रतिबन्धकतावच्छेदकतया जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयताया स्वरूपसम्बन्धरूपायाः प्रतिबन्धकतावच्छेदकताया विरहादिति वाच्यम् ।

[1]प्रागुक्तरीत्या विनिगमनाविरहेण प्रतिबन्धकताद्वयस्यावश्यमभ्युपगन्तव्यतया तादृशह्रदविषयतायाः अपि प्रतिबन्धकतावच्छेदकत्वाऽक्षतेः ।

तथा च विशिष्टान्तरविषयिताऽव्यापकत्वविशेषणेन निरुक्तोभयवद्वृत्तित्वे; उभय-उभयवद्ध्रदयोश्चातिव्याप्तेर्वारणात्[2] नातिव्याप्तयः इति सङ्गच्छत एवेति ध्येयम् । इत्थं च अधुना (४२ कोटौ) सत्यन्तदले विरोध्यनुमितिजनकताव्यापकत्व विशेषणं अविवक्षितमेव, प्रयोजनाभावात् ।

अत्र कोटौ अनुगमे विशेषस्तु –

प्रतिबद्ध्यतावैशिष्ट्यम् आधेयत्वस्वविशिष्टजनकतावृत्तित्वोभयसम्बन्धेन । आधेयत्वं स्वसेत्यादिभेदवत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं केवलस्वनिरूपितप्रतिबन्धकतावत्वसम्बन्धेन । जनकतायां स्ववैशिष्ट्यं स्वावच्छेदकावच्छिन्नप्रतिबध्यतेत्यादिजन्यतानिरूपितत्वसम्बन्धेन । वृत्तित्वं स्वसमानेत्यादिभेदवत्त्वस्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । स्वाधिकरणत्वं स्वावच्छिन्नेत्यादिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन ।

---

1. २७तमकोटिव्याख्याने उच्यत इत्यादिग्रन्थोक्तदिशा । परंपरासम्बन्धेन वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टत्वेनेव विनिगमनाविरहेण ह्रदत्वावच्छिन्न विशेष्यताविशिष्टत्वेनापि प्रतिबन्धकतायाः सिद्धेरिति भावः ।

2. वह्न्यभावघटितोभयवद्ध्रदविषयकनिश्चयीयायां जलव्यापकेत्याद्युभयवद्ध्रद विषयकनिश्चयीयायां च विरोध्य नुमितिजनकतायां ह्रदो वह्न्यभावव्याप्य व्याप्यवान् इत्याकारकनिश्चयनिष्ठायां वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयित्वात्मकविशिष्टान्तरविषयिताव्यापकत्वस्य सत्त्वेन तदव्यापकत्वस्य दुर्घटतया उभयवद्ध्रद निश्चयीयजनकतायाः लक्षणघटकत्वासम्भवात् ।

४३. सत्प्रतिपक्षज्ञानस्यानुगतरूपेण साध्याभावानुमितिजनकत्व-स्वीकारेण व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तेः, स्वावच्छिन्नाविषयक-प्रतीतिविषयतावच्छेदकीभूतशैवालव्यापकवह्न्यभावसमानाधिकरण-शैवालवद्ध्रदत्वाद्यवच्छिन्नविषयत्वाव्यापकत्वस्य जलव्यापकवह्न्यभाव-समानाधिकरणजलवद्ध्रदविषयकनिश्चयीयजनकतायामसत्त्वात् ॥

---

## विवेचनी

स्ववैशिष्ट्यं धर्मे स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं स्वावच्छिन्नविषयतावत्वसम्बन्धावच्छिन्न स्वनिष्ठेत्यादिभेदवत्वसम्बन्धेन । धर्मवैशिष्ट्यं स्वसमानेत्यादिभेदवत्व सम्बन्धेन । स्वाधिकरणत्वं स्वावच्छिन्नेत्यादिनिश्चयत्वसम्बन्धेन। भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन ।

यद्रूपावच्छिन्नविषयितासामान्यनिष्ठस्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छे-दकताघटितलक्षणानुगमे तु आधेयता स्वसेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्ननिरूपकताकानाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीयविषयितात्व-सम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वनिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन। प्रतिबन्धकतावैशिष्ट्यं स्वावच्छेदकत्व- आधेयत्वोभयसम्बन्धेन । आधेयता स्वसेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वाश्रयानाहार्याप्रामाण्य-ज्ञानानास्कन्दितनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन।

४३) व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तेरिति -

अथात्राऽव्याप्त्यभिधानमसङ्गतम् । तथाहि । अत्र लक्षणे प्रकृतानुमिति-विरोध्यनुमितिजनकतायां स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूत-यत्किञ्चिद्रूपावच्छिन्नविषयकत्वाऽव्यापकत्वं निवेशितम् । तच्च तादृशकिञ्चिद्रूपावच्छिन्न-विषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। तथा च 'जलव्यापकवह्न्यभाव-समानाधिकरणजलवान् ह्रदः इतिनिश्चयीयायां विरोध्यनुमितिनिरूपितजनकतायां जलव्यापकवह्न्य भावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयता-वच्छेदकी भूतं यत् घटवद्भूतलत्वादि तदवच्छिन्नविषयकत्वसमानाधिकरणभेदप्रति-योगितावच्छेदकत्वस्य सत्त्वेन, तस्या जनकताया लक्षणघटकत्वं सम्भवत्येव। तदनतिरिक्तवृत्तित्वं च निरुक्तसत्प्रतिपक्षविषयितायां वर्तते इति चेत् ।

४४. नच स्वावच्छिन्नविषयकत्वाव्यापकविषयताशून्यज्ञानीयविशिष्टांतरविषयत्वाव्यापकत्वस्य विरोध्यनुमितिजनकतायां निवेशान्नोक्ता-

---

विवेचनी

अत्रोच्यते- व्यापकत्वसम्बन्धेन स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयकत्वविशिष्टान्यत्वमेव स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयकत्वाऽव्यापकत्वमित्यनेन ग्रन्थकृतां विवक्षितम् । तथासति वृत्तित्वपक्षके निरुक्तोभयवद्वृत्तित्त्वत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकी भूतं यत् तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वत्वं तदवच्छिन्नविषयितायाः व्यापकतासम्बन्धे वैशिष्ट्यस्य निरुक्तजनकतायां सत्त्वेन तत्र तादृश विशिष्टान्यत्वस्य दुर्घटतया, तस्य जनकताया लक्षणाऽघटकतया निरुक्तोभयवद्वृत्तित्वेऽतिव्याप्तेर्वारणसम्भवात् ।

न तु स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपम्, उक्तोभयवद्वृत्तित्वाऽतिव्याप्तेरवारणात् । तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वम् इति निश्चयीयविरोध्यनुमितिजनकतायां निरुक्तोभयवद्वृत्तित्त्वत्त्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतं यत् घटवद्भूतलत्वादि तदवच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य अक्षतत्वात् ।

तथा च ह्रदो वह्निमानित्यत्र जलयापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतं यत् शैवालव्यापकवह्न्यभावसमानाधिकरणशैवालवद्ध्रदत्वादि तदवच्छिन्नविषयकत्वव्यापकत्वस्य दर्शितसत्प्रतिपक्षनिश्चयीयजनकतायां सत्त्वेन तत्र व्यापकत्वसम्बन्धेन तथाविधविशिष्टान्यत्वस्य दुर्घटतया तस्याः लक्षणाऽघटकतया अव्याप्त्यभिधानं ग्रन्थकृतां सङ्गच्छत एवेति ध्येयम् ।

४४) स्वावच्छिन्नविषयकत्वाव्यापकविषयताशून्यज्ञानीयेति ।

अनुगमेऽयं विशेषः- धर्मे स्ववैशिष्ट्यं स्वविशिष्टप्रतीतिविषयता

ऽव्याप्तिः,शैवालव्यापकवहन्यभावसमानाधिकरणशैवालवद्ध्रद-विषयतायाः जलव्यापकवहन्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्न-विषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वाभाववदिति वाच्यम् ॥

४५. वहन्यभावव्यापकं यज्जलव्यापकवहन्यभावसमानाधिकरणजलं तत्समानाधिकरणवहन्यभाववद्ध्रदात्मके सत्प्रतिपक्षोन्नायकेऽतिव्याप्तेः दुर्वारत्वात्, तज्ज्ञानीयजनकताया निरुक्तविशेषणाक्रान्तविशिष्टांतर-विषयित्वाव्यापकत्वात्, उक्तविशिष्टविषयिताया बाधज्ञानीयप्रतिबन्धकता-वच्छेदकत्वाच्च ॥

---

विवेचनी

वच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं स्वावच्छिन्नविषयतावत्वसम्बन्धावच्छिन्ने-त्यादिभेदवत्वस्वविशिष्टधर्मावच्छिन्नविषयतावत्वसम्बन्धावच्छिन्नस्वनिष्ठेत्यादिभेदवत्व-सम्बन्धद्वयेन । धर्मे स्ववैशिष्ट्यं स्वसमानाधिकरणाभावप्रतियोगितावृत्तित्वसम्बन्धेन। स्वाधिकरणत्वं स्वावच्छिन्नविषयताकत्वसम्बन्धेन । प्रतियोगितावृत्तित्वं स्वावच्छिन्न-विषयतात्वावच्छिन्नत्वसम्बन्धेन ।

४५. वहन्यभावव्यापकं यत् वहन्यभाववद्ध्रदात्मके सत्प्रतिपक्षोन्नयक इति ।

ह्रदो वह्निमानित्यत्र जलव्यापकवहन्यभावसमाधिकरण जलवद्ध्रदः सत्प्रतिपक्षः। तद्विषयिणीं ह्रदो जलव्यापकवहन्यभावसमाधिकरणजलवान् इत्याकारिकां ह्रदत्वा-वच्छिन्नविशेष्यतानिरूपितजलव्यापकवहन्यभावसमाधिकरणजलत्वावच्छिन्न-प्रकारताकानुमितिं प्रति ह्रदत्वावच्छिन्नविशेष्यकस्य किञ्चिद्धेतुव्यापकता-विशेषितजलव्यापकवहन्यभावसमाधिकरणजलसमानाधिकरणतद्धेतुप्रकारकस्य निश्चयस्य परामर्शविधया जनकत्वात्, वहन्यभावव्यापकजलव्यापकवहन्यभाव-समाधिकरणजलसमानाधिकरणवहन्यभाववन् ह्रदः इति निश्चयस्य तथात्वात् तद्विषयीभूतविशिष्टस्य सत्प्रतिपक्षोन्नायकत्वं बोध्यम् ।

वहन्यभावव्यापकं यज्जलव्यापकवहन्यभावसमानाधिकरणजलमिति । नन्वेतदसंगतम् । जलस्य वहन्यभावव्यापकत्वाभावेन निरुक्तविशिष्टाऽप्रसिद्धेरिति चेन्न। ह्रदानुयोगिकस्वरूपसम्बन्धेन वहन्यभावं प्रति जलस्य व्यापकता सम्भवात् । न

४६. नच स्वावच्छिन्नानिरूपितविशिष्टविषयित्वाव्यापकप्रकृतानुमिति प्रतिबन्धकत्वस्य सत्यन्तार्थतया नोक्तातिव्याप्तिः, बाधज्ञानीयप्रति-बन्धकताया निरुक्तविशिष्टाऽनिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयता व्यापकतया तदव्यापकप्रकृतानुमितिप्रतिबन्धकताया अप्रसिद्धत्वात्। नापि निरुक्तोभयवद्ध्रदादावतिव्याप्तिः, तत्र स्वावच्छिन्नाऽनिरूपित-विशिष्टविषयित्वाव्यापकप्रकृतानुमितिप्रतिबन्धकताया अप्रसिद्धात्वादिति वाच्यम् ॥

---

## विवेचनी

चैवं सति निरुक्तविशिष्टस्य प्रसिद्धावपि तस्य बाधघटितत्वा नुपपत्तिः, स्वरूपसम्बन्धेन वह्न्यभावविशिष्टह्रदस्यैवात्र बाधत्वात्। ह्रदानुयोगिकस्वरूपसम्बन्धेन वह्न्यभाव-विशिष्टह्रदस्यैव तु निरुक्तविशिष्टघटकत्वात्। तथा च निरुक्तविशिष्टविषयिताया बाधज्ञानीयप्रतिबन्धकतावच्छेदकतया अतिव्याप्त्यभिधानमसङ्गतमिति वाच्यम् ह्रदानुयोगिकस्वरूपसम्बन्धेन वह्न्यभाववत्तानिश्चयस्यापि ह्रदत्वावच्छिन्ने वह्निमत्ताबुद्धिं प्रति प्रतिबन्धकतया तत्सम्बन्धघटितविशिष्टस्यापि बाधरूपतायाः आवश्यकत्वात्

यद्यपि, ह्रदः वह्निजलाभावोभयवान् इत्यत्र जलव्यापकवह्न्यभाव-व्याप्यसमानाधिकरणजलवद्ध्रदे तथाविधे सत्प्रतिपक्षोन्नायके जलवद्ध्रदा-त्मकबाधस्य सम्बन्धसंकोचमन्तरा घटकत्वं शक्योपपादनं, तन्निश्चयीय जनकताया विशिष्टान्तरविषयिताऽव्यापकत्वं, तद्विषयितासामान्ये बाधविषयितात्वे स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वञ्चाक्षतम्, तथापि दलद्वयघटक प्रतिबध्यतयोरैक्यविवक्षणस्यावश्यकतया[1] नात्रोन्नायकेऽतिव्याप्ति प्रसङ्ग इत्याशये तदुपेक्षणम्।

४६) स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वाऽव्यापकप्रकृतानुमिति प्रतिबन्धकत्त्वस्य सत्यन्तार्थतयेति।

अत्रापि स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वाऽव्यापकत्वं व्यापकता- सम्बन्धे स्वावच्छिन्नाऽनिरूपितविषयिताविशिष्टान्यत्वरूपमेव। न तु यथाश्रुतं तादृशविशिष्टान्तर

---

1. अन्यथा, ह्रदो वह्निवह्न्यभावव्याप्यव्याप्योभयवानित्यत्र वह्न्यभावव्याप्य व्याप्यवद्ध्रदे बाधसत्प्रतिपक्षोन्नायकोभयात्मकेऽतिव्याप्तिः।

विषयितासमानाधिकरणभेदप्रतियोगितावच्छेद कत्वरूपम्, निरुक्तोन्नायकातिव्याप्तेः अवारणात् ।

अधुना (४६ कोटौ) विशेष्यदलघटकजनकतायां विशिष्टान्तरविषयिताऽव्यापकत्वविशेषणं त्यक्तमेव, प्रयोजनाभावात् । उभयवद्वृत्तित्वे; उभयत्र उभयवद्ध्रदयोश्च प्रसक्ताऽतिव्याप्तेर्विशिष्टान्तरविषयिताऽव्यापकप्रकृताऽनुमितिप्रतिबन्धकतावच्छेदकत्वरूपसत्यन्तदलेनैव वारणात् । तत्तन्निश्चयीयप्रकृतानुमितिप्रतिबन्धकतायां विशिष्टान्तरविषयिताऽव्यापकताविरहात् ।

नोक्तातिव्याप्तिरिति ।

इदमुपलक्षणम्–तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वे पूर्वोक्ते बाधघटिते सत्प्रतिपक्षोन्नायकेऽप्यधुना नातिव्याप्तिः ।

न च साऽतिव्याप्तिर्यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वं निवेश्य पूर्वमेव वारितेति वाच्यम् ।

वहन्यभावव्यापकेत्यादिसत्प्रतिपक्षोन्नायके बाधघटितेऽतिव्याप्तिवारणाय विशिष्टान्तरविषयिताऽव्यापकत्वदलस्य सत्यन्तघटकप्रतिबन्धकतायामवश्यंनिवेश्यतया, तेनैव तद्व्यक्तिव्यापकेत्यादिसत्प्रतिपक्षोन्नायकेऽप्यतिव्याप्तेर्वारणेन, यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वस्यानिवेश्यतया लाघवात्। एवञ्च यद्रूपावच्छिन्नविषयितासामान्ये स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वमपि नावश्यकम् ।

स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वाऽव्यापकप्रकृतानुमितिप्रतिबन्धकताया अप्रसिद्धत्वादिति ।

निरुक्तसत्प्रातिपक्षोन्नायकनिश्चये बाधनिश्चयीयप्रतिबन्धकताऽतिरिक्तप्रतिबन्धकताया विरहादित्याशयः ।

नन्वेवं सति बाधघटितसत्प्रतिपक्षे जलव्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदेऽव्याप्तिः । तन्निश्चयस्य क्लृप्तबाधनिश्चयीयप्रतिबन्धकतयैव तदुत्तरमनुमित्यनुत्पादस्य निर्वाहे तदतिरिक्ताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अस्वीकारात्, बाधनिश्चयीयप्रतिबन्धकतायास्तु विशिष्टान्तरविषयिताऽव्यापकत्वाभावेन लक्षणाऽघटकत्वादिति वाच्यम् ।

जलव्यापकं समानाधिकरणजलं जलवांश्च ह्रदः इतिनिश्चययोः समानाधिकरणजलाभाववत्ताबुद्धिप्रतिबन्धकत्वानुभवस्य क्लृप्तबाधनिश्चयीयप्रतिबन्धकतया निर्वाहाऽसम्भवेनाऽतिरिक्तप्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नाया अवश्यं स्वीकरणीयतया तामादायैव निरुक्तसत्प्रतिपक्षे लक्षणगमनसम्भवात् ।

एतेन, बाधघटितस्य सत्प्रतिपक्षरूपताऽनङ्गीकारे, विशिष्टान्तरत्वशरीरे विरोध्यनुमितिजनकतानतिरिक्तवृत्त्वनिवेशस्य बाधघटितविशिष्टेऽव्याप्त्यवारकत्वेन निर्युक्तिकतया प्रकृतानुमितिप्रतिबन्धकतामात्रघटितस्य विशिष्टान्तराऽघटितत्वस्य निर्दुष्टतया, तेनैव दलेनोभयवद्ध्रदातिव्याप्तेर्वारणात् एतावान् प्रयासो विफलस्स्यादिति परास्तम् ।

बाधादिविरोधिताऽतिरिक्तविरोधिताऽशून्यस्यैव बाधादिघटितविशिष्टस्य सत्प्रतिपक्षरूपताया अनभ्युपगमात् । जलव्यापकसमानाधिकरणजलेत्यादिविशिष्टस्य प्रागुक्तयुक्त्या बाधविरोधिताऽतिरिक्तविरोधितावत्त्वेन, बाधघटितत्वेऽपि सत्प्रतिपक्षरूपताया अवर्जनीयतया तत्सङ्ग्राहकत्वेन विशिष्टाऽन्तरत्वशरीरे विरोध्यनुमितिजनकताऽनतिरिक्तवृत्तित्वप्रवेशनस्य सार्थक्यात् । बाधघटितस्य वह्न्यभावव्यापकजलव्यापकवह्न्यभावेत्यादिविशिष्टस्य तु प्रागुक्तस्य बाधविरोधिताऽतिरिक्तविरोधितायाः निर्युक्तिकतया सत्प्रतिपक्षत्वानङ्गीकारेण तत्रातिव्याप्तिवारणस्य युक्तत्वात् ।

इत्थञ्च घटत्वव्यापकघटत्ववद्ध्रदेत्यादिविशिष्टस्य अभावविशिष्टव्यापकेत्यादिविशिष्टस्य च स्वघटकविशिष्टीयविरोधिताऽतिरिक्तविरोधि[1] तावत्त्वे सत्प्रतिपक्षरूपता इष्टैव । अतथात्वं तु वह्न्यभावव्याप्यव्यापकवह्न्यभावसमनाधिकरणवह्न्यभावव्याप्यवद्ध्रदादीनामेव ।

अत्र कोटौ अनुगमे विशेषः- प्रतिबद्ध्यतावैशिष्ट्यं स्वविशिष्टजनकताविशिष्टत्वस्वनिरूपितप्रतिबन्धकताविशिष्टत्वोभयसम्बन्धेन ।

स्ववैशिष्ट्यं जनकतायां स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितत्वसम्बन्धेन । जनकतावैशिष्ट्यं स्वसेत्यादिभेदवत्त्वसम्बन्धावच्छिन्नाधेयतासम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन । प्रतिबन्धकतावैशिष्ट्यं स्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्न

1. ५० कोटिव्याख्याने वक्ष्यमाणरीत्या ।

४७. व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तेः, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षविषयकनिश्चयीयप्रतिबन्धकतायास्तादृशविशिष्टाऽनिरूपितप्रतिहेतुव्यापकसाध्याभावसमानकालीनप्रतिहेतुमत्पक्षविषयिताव्यापकत्वेन विशिष्टान्तरविषयित्वाऽव्यापकप्रकृतानुमितिप्रतिबन्धकताया अप्रसिद्धेः ॥

४८. नच स्वावच्छिन्नविषयकत्वाऽव्यापकविषयताशन्यज्ञानीयत्वस्य विशिष्टांतरविषयितायां निवेशान्नाव्याप्तिः, प्रतिहेतुव्यापकसाध्याभाव-

---

विवेचनी

धेयतास्वसेत्यादिभेदवत्त्वसम्बन्धावच्छिन्नाधेयतोभयसम्बन्धेन । तत्र प्रथमे स्वविशिष्टत्वं स्वावच्छिन्ननिरूपकताकविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । धर्मवैशिष्ट्यं स्वसेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्ननिरूपकताकानाहार्येत्यादिनिश्चयीयविषयितावत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूप सम्बन्धेन।

द्वितीये स्वाधिकरणत्वं स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन ।

४७) व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तेरिति ।

इदमुपलक्षणम्- घटो अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्ववानित्यत्र तादृशसामान्यत्वाभावाभाववदवृत्तिमद्धटे सत्प्रतिपक्षेऽव्याप्तिः। तन्निश्चयीयक्लृप्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाम् अभावविशिष्टव्यापकसामान्यात्वाभावकालीनाभावविशिष्टवद्धटात्मकविशिष्टान्तर विषयिताव्यापकताया एव सत्वेन व्यापकतासम्बन्धेन तादृशविशिष्टान्तरविषयिताविशिष्टान्यत्वविरहेण तस्याः प्रतिबन्धकतायाः लक्षणघटकत्वाऽसम्भवात् । अग्रिमकोटौ वक्ष्यमाणाऽव्यापकविषयिताशून्यत्वदलेन इयम् अव्याप्तिः परिह्रियते ।

वस्तुतस्तु, ५०तमकोटिव्याख्यायां वक्ष्यमाणरीत्या तादृशसाध्याभावव्याप्यवत्तानिश्चयत्वेन अतिरिक्तप्रतिबन्धकतायाः आवश्यकतया तामादायैव लक्षणगमनसम्भवात् नाऽव्याप्तिप्रसक्तिरिति ।

४८) स्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य विशिष्टाऽन्तरविषयितायां निवेशादिति ।

समानकालीनप्रतिहेतुमत्पक्षविषयितायाः प्रतिहेतुव्यापकसाध्याभाव-समानाधिकरणप्रतिहेतुमत्पक्षविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वा-भावादिति वाच्यम् ॥

४९. घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ अभावव्यापक-गगनाभाववदभाववत्कालीनगगनाभावसमानाधिकरणाभाववद्घटरूप-सत्प्रतिपक्षेऽव्याप्तेः, तत्र निरुक्तसत्प्रतिपक्षविषयकज्ञानदशायामनु-मित्य नुत्पादस्य अभाववान् गगनाभाववान्, अभाववांश्च घट इति निश्चययोरेकविशिष्टापरत्वेन प्रतिबन्धकतयैवोपपत्तेः, प्रतिबन्धकतां-मानाभावात्तादृशप्रतिबन्धकतायाश्च निरुक्तसत्प्रतिपक्षानिरूपित-तद्विषयकत्वाऽव्यापकविषयताशून्यज्ञानीयगगनाभाववदभाववत्कालीन-गगनाभावसमानाधिकरणाभाववद्घटविषयिताव्यापकत्वेन तादृश-विषयित्वाव्यापकप्रतिबन्धकताऽवच्छेदकत्वस्य निरुक्तसत्प्रतिपक्ष-विषयतायामभावात् ॥

५०. नच तस्य सत्प्रतिपक्षता नाङ्गीक्रियते, सामान्यलक्षणानाक्रान्त-त्वात् । तथाहि, प्रतिबन्धकताघटितलक्षणे स्वावच्छिन्नाऽनिरूपितविशिष्ट

---

विवेचनी

अनुगमे विशेषः – स्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकता-कप्रतियोगिताकभेदवत्वसम्बन्धावच्छिन्नाधेयतासम्बन्धे घटकीभूतं स्ववैशिष्ट्यं स्वावच्छिन्ननिरूपकताकविषयिताशून्यप्रतीतिविषयताऽवच्छेदकत्वस्वविशिष्टत्वसम्बन्धा-वच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसम्बन्धेन । तत्र स्ववैशिष्ट्यं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन। स्वाधिकरणत्वं स्वावच्छिन्न-विषयताकज्ञानत्वसम्बन्धेन । प्रतियोगिताव च्छेदकत्वं स्वावच्छिन्ननिरूपकताक-विषयितावत्त्वसमबन्धेन ।

५०) स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वाऽव्यापकप्रतिबन्धकता-वच्छेदकस्वावच्छिन्नविषयताकत्वस्यैव निष्कृष्टविशिष्टान्तराऽघटितत्व-रूपतयेति ।

अत्र स्वावच्छिन्नाऽनिरूपितविशिष्टविषयिताऽव्यापकत्वं न तादृशविषयितासमाना-

विषयित्वाव्यापकप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयताकत्वस्यैव निष्कृष्टविशिष्टान्तराघटिततत्वरूपतया तस्य चोक्तरीत्याउक्तविशिष्टेऽभावात्, अत्रवदन्तीत्यादिकल्पीयस्य विशिष्टान्तरविषयित्वाप्रयोज्येत्यादिनिष्कृष्ट-विशिष्टान्तराघटिततत्वस्याप्यत्रासम्भवात्, न सामान्य लक्षणाक्रान्ततोक्त-विशिष्टस्य। यदि च अभावव्यापको निरुक्तसाध्याभावः अभाववांश्च घटः, प्रमेयत्वव्यापकस्तादृशसाध्याभावः प्रयेत्ववांश्च घट इत्यादि-निखिलनिश्चयानामेकरूपेण प्रतिबन्धकत्वस्वीकारात् सामान्यलक्षणा-क्रान्तत्वमुक्तविशिष्टस्य सम्भवत्येव, उक्तानुगतप्रतिबन्धकतायाश्च अभाव-वान् गगनाभाववान्, अभाववांश्च घट इतिज्ञानयोरेकविशिष्टापरत्वेन प्रतिबन्धकत्वांगीकारेपि प्रमेयत्वव्यापकः तादृशसाध्याभावः, प्रमेयत्व-वांश्च घट इति निश्चयादनुमितिप्रतिबन्धानुरोधेन अवश्यकल्पनीयतया तामादायैव प्रतिबन्धकताघटितलक्षणपक्षीय विशिष्टांतराघटिततत्वसम्भवात्, एवमत्रवदंतीत्यादिकल्पीयविशिष्टांतराऽघटिततत्वस्यापि तत्र सूपपादत्वादि-त्युच्यते; तदा निरुक्तसत्यन्तार्थस्यापि उक्तप्रतिबन्धकतामादायैवोप-पादयितुं शक्यत्वेनोक्ताव्याप्तेस्सुदूरपराहतत्वाद् ।

तस्मान्निरुक्तलक्षणं निष्कृष्टमेवेति वाच्यम् ॥

---

## विवेचनी

धिकरणभेदप्रतियोगितावच्छेदकत्वम् । मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नाऽनिरूपित-घटत्वाद्युदासीनधर्मावच्छिन्नविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य व्यभिचारनिश्चयीयप्रतिबन्धकतायामक्षततया, मेयत्वविशिष्टव्यभिचारादावतिव्याप्ते-रवारणात् । अपितु, पूर्वोक्तरीत्या स्वव्यापकतासम्बन्धेन तादृशविशिष्टान्तरविषयिता-विशिष्टान्यत्वमेव ।

प्रतिबन्धकतावच्छेदकत्वं न स्वरूपसम्बन्धरूपम्, घटोऽवृत्तिरित्यत्र घटवति बाधेऽव्याप्ति-प्रसङ्गात्[1] । अपि तु, अनतिरिक्तवृत्तित्वरूपम् । तच्च न तच्छून्यावृत्तित्वम्,

---

1. घटवान् इति निश्चयस्य लाघवात् घटत्वावच्छिन्नप्रकारताकत्वेनैव प्रतिबन्धकतोपगमेन तादृशप्रकारतानिरूपितविशेष्यतायाः घटवन्निष्ठायाः प्रतिबन्धकतानवच्छेदकत्वात् ।

असम्भवप्रसंगात्। अपि तु, स्वव्यापकतत्कत्वम् । विषयिता अनाहार्याऽप्रामाण्य-ज्ञानाऽनास्कन्दितनिश्चयीयत्वेन विशेषणीया, अन्यथा पुनरसम्भवः । तथा च यद्रूपावच्छिन्नाऽनिरूपितविषयिता विशिष्टा-[1]न्यप्रकृतानुमितिप्रतिबन्धकत अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीयस्वावच्छिन्नविषयिताव्यापिका तद्रूपवत्त्वमि फलितम् ।

अत्र दोषज्ञानीय – दोषैकदेशविषयिताव्यापकताया एव दोषनिश्चयीय प्रतिबन्धकत अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीयस्वावच्छिन्नविषयिताव्यापिका तद्रूपवत्त्व-मिति फलितम् । अत्र दोषज्ञानीयदोषैकदेशविषयिताव्यापकताया एव दोषनिश्चयीय-प्रतिबन्धकतायां सत्वेनाऽसम्भवः। अतः यद्रूपावच्छिन्नाऽनिरूपितविषयितानिरूपकता-वच्छेदकधर्मवैशिष्ट्यमेव भेदप्रतियोगितावच्छेदकतया निवेशनीयम् । वैशिष्ट्यञ्च स्वावच्छिन्ननिरूपकताकानाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीयविषयितासमानाधि करणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन । एवमपि, व्यापकताघटितसत्प्रतिपक्षे ऽव्याप्तितादवस्थ्यम् । तद्विषयिताऽनिरूपिता या कालीनत्वघटितविशिष्टीयविषयि तन्निरूपकतावच्छेदकावच्छिन्नविषयिताव्यापकतायाः एव सत्प्रतिपक्षनिश्चयीय प्रतिबन्धकतायां सत्त्वात् । अतोऽव्यापकविषयिताशून्यज्ञानीयत्वेनापि विशिष्टान्तरविषयि विशेषणीया ।

तस्मान्निरुक्तलक्षणं निष्कृष्टमेवेतीति । प्रकृतपक्षतावच्छेदकविशिष्टपक्ष विषयकत्वाव्यापकप्रकृतसाध्यतावच्छेदकविशिष्टसाध्यविषयकत्वाऽव्यापकप्रकृतपक्षता वच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्व व्यापकयद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपितस्वावच्छिन्नविषयकत्वाऽव्यापक विषयिताशून्यस्वावच्छिन्नविषयिताशून्यज्ञानीयविषयिताविशिष्टान्यप्रतिबन्धकता वच्छेदिका सती, तद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नाऽनुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयि तद्रूपवत्त्वम् इति विशिष्टान्तराऽघटितत्त्वदलसहितदलद्वयसमुदितार्थः ।

अयमनुगमः– पक्षतावच्छेदकविशिष्टधर्मवत्त्वम् । वैशिष्ट्यं स्वविशिष्टप्रतिबध्यता विशिष्टत्वसम्बन्धेन । स्ववैशिष्ट्यं पूर्वोक्तमेव । प्रतिबध्यतावैशिष्ट्यं स्वविशिष्टजनकता विशिष्टत्वस्वनिरूपितप्रतिबन्धकताविशिष्टत्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट

---

2. विषयितावैशिष्ट्यं स्वव्यापकतासम्बन्धेन ।

जनकतावैशिष्ट्यं च ४६ तमकोटावुक्तमेव । द्वितीये प्रतिबन्धकतावैशिष्ट्यं पूर्वम् (४६ कोटौ) उक्ताधेयताद्वयसम्बन्धेन । तत्र प्रथमाधेयतायाः अवच्छेदकीभूतसम्बन्धे घटकीभूतं स्ववैशिष्ट्यं धर्मे ४८ तमकोटावुक्तमेव । अन्यत् सर्वं ४६ तमकोटौ उक्तमेव ।

वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे जलव्यापकवह्न्यभाव-कालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे च सत्यन्तदलेनाऽतिव्याप्तिः वार्यते । तत्तन्निश्चयीयप्रतिबन्धकतयोः क्रमेण वह्न्यभाववद्ध्रदविषयितात्मिकायाः जलव्यापक-वह्न्यभावकालीनजलवद्ध्रदविषयितात्मिकायाश्च विशिष्टान्तरविषयितायाः वैशिष्ट्यस्य सत्त्वेन तद्विशिष्टान्यत्वविरहेण तयोः प्रतिबन्धकतयोः लक्षणाऽघटकत्वात् ।

एवं पूर्वोक्ते वृत्तित्वपक्षके तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्न-त्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तितादात्म्यसम्बन्धावच्छिन्न-त्वोभयवद्वृत्तित्वे; घटपक्षके पृथिवीत्वव्यापकसामान्यत्वाभावकालीनपृथिवीत्वसामान्य-त्वाभावव्याप्यव्याप्योभयवद्घटे च नातिव्याप्तिः । तन्निश्चयीयप्रतिबन्धकतयोः क्रमेण तादात्म्यसमान्धावच्छिन्नवृत्तिताविषयितात्मिकायाः पृथिवीत्वव्यापकसामान्यत्वाभाव-कालीनपृथिवीत्ववद्घटविषयितात्मिकायाश्च विशिष्टान्तरविषयितायाः वैशिष्ट्यस्य सत्त्वेन तद्विशिष्टान्यत्वविरहेण तयोः लक्षणाऽघटकत्वात् ।

एवं, वह्न्यभावव्यापकं यत् जलव्यापकवह्न्यभावसमानाधिकरणजलं तत्समानाधिकरणवह्न्यभाववद्ध्रदे, तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्य-वन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद् वृत्तित्वे च सत्प्रतिपक्षोन्नायक-योर्नातिव्याप्तिः । तन्निश्चयीयप्रतिबन्धकतयोः क्रमेण वह्न्यभाववद्ध्रदविषयितायाः, तादात्म्यसम्बन्धावच्छिन्नवृत्तिता विषयितायाः विशिष्टान्तरविषयितायाः वैशिष्ट्यस्य सत्त्वेन तद्विशिष्टान्यत्वाभावेन तयोः लक्षणाऽघटकत्वात् ।

वृत्तित्वं तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्ववन्निरूपिततादात्म्य-सम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमत् इति सत्प्रतिपक्षनिश्चये तादात्म्यसम्बन्धाव-च्छिन्नात्वाभाववति तादात्म्यसम्बन्धावच्छिन्नत्वप्रकारकम् इदं ज्ञानम् इत्यप्रामाण्यग्रहे सत्यपि तादात्म्यसम्बन्धावच्छिन्नत्वाभाववत्तानुमितेरनुत्पादानुरोधेन बाधनिश्चयीयप्रति-बन्धकताऽतिरिक्तप्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नायाः तत्र निश्चये स्वीकरणीयतया, विशिष्टान्तरविषयिताऽव्यापिकां तामेव प्रतिबन्धकतामादाय तद्व्यक्तिव्यापकतादात्म्य-

सम्बन्धावच्छिन्नत्ववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वे समन्वयः ।

जलव्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदे च पूर्वोक्तयुक्तिसिद्ध बाधप्रतिबन्धकतातोऽतिरिक्तप्रतिबन्धकतामादाय समन्वयः । अभावविशिष्टव्यापक-सामान्यत्वाभावकालीनसामान्यत्वाभावाभाववदवृत्तिमद्घटे नाऽव्याप्तिः । तन्निश्चये अभावविशिष्टाभाववति अभावविशिष्टप्रकारकम् इदम् ज्ञानम् इत्यप्रामाण्यग्रहे सत्यपि तादृशसामान्यत्ववत्ताबुद्धेरनुदयात् क्लृप्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतापेक्षया अतिरिक्तप्रतिबन्धकतायास्तादृशसामान्यत्वाभावव्याप्यवत्तानिश्चयत्वावच्छिन्ना-यास्स्वीकार्यतया, अव्यापकविषयितशून्यज्ञानीयविशिष्टान्तरविषयिताऽव्यापिकां तामेव प्रतिबन्धकतामादाय तत्र सत्प्रतिपक्षे समन्वयसम्भवात् ।

न च तथापि तस्य सामान्यत्वाभावाभाववदवृत्तिमद्घटात्मकविशिष्टान्तरघटितत्वात् तत्राऽव्याप्तिर्दुर्वारा । सामान्यत्वाभावाभाववदवृत्तिमद्घटस्य प्रकृतानुमितिप्रतिबन्धकता-विरोध्यनुमितिजनकतोभयघटितविशिष्टान्तरत्वाऽक्षतेरिति वाच्यम् ।

निरुक्तरीत्या परिष्कृतलक्षणे पृथग्विशिष्टान्तराऽघटितत्वदलस्य अनिवेशात् मेयत्वविशिष्टसत्प्रतिपक्षविषयितायां सत्यन्तविरहेणैव अनतिप्रसंगात् । सामान्यत्वाभावा-भाववदवृत्तिमद्घटविषयितात्मकविशिष्टान्तरविषयिताऽव्यापिकामभावविशिष्टेत्यादि-कालीनसामान्यत्वाभावव्याप्यवत्ता निश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय अभावविशिष्टेत्यादिसत्प्रतिपक्षीयविषयितायां सत्यन्तोपपादनसम्भवेन तत्र सत्प्रति-पक्षेऽव्याप्तिविरहात् ।

घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभावेऽपि नाऽव्याप्तिः तन्निश्चये घटत्वाभाववति घटत्वप्रकारकम् इदं ज्ञानम्, घटत्वाभावव्याप्याभावव घटत्वाभावव्याप्यप्रकारकम् इत्यप्रामाण्यग्रहे सत्यपि तादृशघटत्ववत्ताबुद्ध्रेरनुत्पादे क्लृप्तज्ञानवैशिष्ट्याद्यवच्छिन्नप्रतिबन्धकतातोऽतिरिक्तायाः निरुक्तकालीनत्वविशेषित घटत्वाभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतायाः आवश्यकत्वात् ।

ननु तथापि गगनाभाववदभाववत्कालीनगगनसाध्यके उक्तसत्प्रति प अनुगतप्रतिबन्धकतामुपगम्य लक्षणसमन्वयस्य सम्भवेऽपि तदनुपगमे तत्राऽव्याप्ति दुर्वारैवेति चेन्न ।

५१. प्रतिबन्धकताघटितलक्षणे उक्तपरिष्कारेणोक्तोभयवद्ध्रदादावति-व्याप्तिवारणेऽपि वह्न्यभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभाव-व्याप्यवद्ध्रदादावव्याप्तिवारणार्थमवश्यं परिष्करणीये, यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावः विरोधिविषयताप्रयुक्तः तद्रूपावच्छिन्नान्यत्वे सति, यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्या-वहितोत्तरानुमितिसामान्ये साध्यधर्मिकसाध्यतावच्छेदकवैशिष्ट्याव-गाहित्वाभावः विरोधिविषयताप्रयुक्तः तद्रूपावच्छिन्नान्यत्वे, यद्रूपावच्छिन्न-विषयताशालिनिश्चयाव्यवहितोत्तरानुमिति सामान्यनिष्ठः विरोधिविषयता-प्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति, यद्रूपावच्छिन्नविषयताशालिनश्चयाव्यवहितोत्तरानुमितित्वव्यापकः विरोधि-विषयताप्रयुक्तः पक्षेसाध्यवैशिष्ट्यविगाहित्वाभावस्तद्रूपावच्छिन्ना या विषयता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नत्वमितिनिष्कृष्टलक्षणे वह्न्यभाव-वह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तेर्दुर्वारत्वात्, तत्र सत्यन्त-दळोन्नायक दळयोस्सत्वादितिचेत् ॥

---

## विवेचनी

अभावव्यापकगगनाभाववदभाववत्कालीनगगनाभावसमानाधिकरणा भाववान् घटः इतिसत्प्रतिपक्षनिश्चये गगनाभावाभाववति गगनाभाव प्रकारकम् इदं ज्ञानम् इत्यप्रामाण्यग्रहे सत्यपि घटे तादृशगगनवत्ताबुद्धेः अनुत्पादानुरोधेन अभावावच्छिन्नधर्मिताकगगनाभावप्रकारकनिश्चयवैशिष्ट्यावच्छिन्नक्लृप्तप्रतिबन्धकतातो अतिरिक्तायाः अभावव्यापकः तादृश गगनाभावः इति निश्चयविशिष्ट- अभाववांश्च घटः इतिनिश्चयत्वावच्छिन्नायाः प्रतिबन्धकताया अभ्युपगन्तव्यतया तामादायैव तत्र सत्प्रतिपक्षे लक्षणसमन्वयात् ।

५१. प्रतिबन्धकताऽघटितस्य अस्य सत्प्रतिपक्षलक्षणस्य अयमनुगमः पक्षतावच्छेदकविशिष्टधर्मवत्त्वम् । पक्षतावच्छेदकवैशिष्ट्यं –

१. स्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व,

२. स्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व,
३. स्वविशिष्टत्व,
४. स्वविशिष्टधर्मविशिष्टत्वैतत्सम्बन्धचतुष्टयेन ।

तत्र प्रथमे स्वविशिष्टत्वं स्वविशिष्टप्रकारताकत्वाभावविशिष्टत्वसम्बन्धेन । त स्ववैशिष्ट्यं प्रकारतायां स्ववृत्तित्वस्वसमानकालीनप्रकृतपक्षनिष्ठविशेष्यतानिरूपित-त्वोभयसम्बन्धेन । अभाववैशिष्ट्यं आधेयतासम्बन्धेन । सा च स्वावच्छिन्न-विषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयाव्यवहितोत्तरानुमितित्व-विशिष्टत्वस्वसमानकालीनविरोधिविषयताप्रयुक्तत्वोभयसम्बन्धावच्छिन्ना । तत्रानुमितित्व-वैशिष्ट्यं स्वसमानेत्यादिभेदवत्वसम्बन्धेन । तत्र स्वाधिकरणत्वं समवायेन, भेदप्रति-योगितावच्छेदकत्वं स्वरूपसम्बन्धेन ।

द्वितीये स्ववैशिष्ट्यं स्वसमानकालीनप्रकृतसाध्यतावच्छेदकविशिष्टप्रकारताक-त्वाभावविशिष्टत्वसम्बन्धेन । तत्र साध्यतावच्छेदकवैशिष्ट्यं प्रकारतायां स्ववृत्तित्व-स्वसमानकालीनप्रकृतसाध्यनिष्ठविशेष्यतानिरूपितत्वोभयसम्बन्धेन । अभाववैशिष्ट्य-माधेयतासम्बन्धेन । सा च स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दित-निश्चयाऽव्यवहितोत्तरानुमितित्वविशिष्टत्वस्वसमानकालीनविरोधिविषयिताप्रयुक्त-त्वोभयसम्बन्धावच्छिन्ना । तत्रानुमितित्ववैशिष्ट्यं स्वसमानेत्यादिभेदवत्वसम्बन्धे

तृतीये स्ववैशिष्ट्यं स्वावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदका-वच्छिन्नप्रकारताकत्वाभावविशिष्टत्वसम्बन्धेन । तत्राभाववैशिष्ट्यम् आधेयतासम्बन्धे सा च स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चया-व्यवहितोत्तरानुमितित्वविशिष्टत्वस्वसमानकालीनविरोधिविषयिताप्रयुक्तत्वोभय-सम्बन्धावच्छिन्ना । तत्रानुमितित्ववैशिष्ट्यं स्वसमानेत्यादिभेदवत्वसम्बन्धेन ।

चतुर्थे स्ववैशिष्ट्यं स्वावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदका-वच्छिन्नप्रकारताकत्वाभावविशिष्टत्वसम्बन्धेन । तत्राभाववैशिष्ट्यम् आधेयतासम्बन्धे सा च पूर्वोक्तसम्बन्धद्वयावच्छिन्ना । धर्मवैशिष्ट्यं स्वावच्छिन्ननिरूपकताकविषयित्वा-वच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्टविषयितानिरूपकतावच्छेदकत्व-सम्बन्धेन । तत्र जनकतावैशिष्ट्यं आधेयतासम्बन्धेन । सा च व्यापकतासम्बन्धावच्छिन्न तत्र स्वाधिकरणत्वं स्वाश्रयानाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धे भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन ।

५२. अत्रवदन्ति विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यपक्ष-धर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वनिवेशान्नोक्तातिव्याप्तिः।

नचैवं सत्यन्तदळवैयर्थ्यं, वह्न्यभावव्याप्यव्याप्यवान्वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इतिज्ञानयोरेकविशिष्टापरत्वेन प्रति-बन्धकतया वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयतायाः पक्षधर्मिकसाध्य-वैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकतया तत्रातिव्याप्तिवारकतया तत्सार्थक्यात् ।

---

## विवेचनी

तद्रूपावच्छिन्नान्यत्वे सतीति ।

नन्वेवं निवेशे ह्रदो वह्निमान् इत्यादौ वह्न्यभावव्याप्यवद्ध्रदादावव्याप्तिः। यद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये ह्रदधर्मिकह्रदत्व-वैशिष्ट्यावगाहित्वाभावः तद्रूपस्याऽप्रसिद्धेः । न च पक्षसाध्यभेदेन लक्षणभेदात् यत्र पक्षाप्रसिद्ध्यादिविरहः, तत्र निरुक्तदलं नोपादेयमेवेति वाच्यम् । एवमपि काञ्चनमयह्रदो वह्निमान् इत्यत्र सत्प्रतिपक्षेऽव्याप्तिः । तत्र काञ्चनमयत्वाभावव्याप्यवद्ध्रदत्वावच्छिन्न-भेदविरहादिति चेत् ।

न । यद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वाऽव्यापकः पक्षधर्मिकपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वस्य निवेशे तात्पर्यात्। काञ्चनमयत्वाभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमिति-त्वाऽव्यापकत्वस्य भूतलधर्मिकघटवैशिष्ट्यावगाहित्वाभावादौ प्रसिद्धस्य पक्षधर्मिक-पक्षतावच्छेदकवैशष्ट्यिावगाहित्वाभावे बाधात्पक्षाप्रसिद्धौ तत्र नातिव्याप्तिः । वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमिति-त्वाऽव्यापकतायास्तु पक्षधर्मिकपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावेऽक्षतत्वात् न निरुक्तसत्प्रतिपक्षाऽव्याप्तिः । एवमग्रेऽपि ।

५२) पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वनिवे-शादिति ।

सत्प्रतिपक्षविषयिताप्रयोज्यस्य पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावस्य बाधात्मकविशिष्टान्तरविषयिताप्रयुक्तत्वनियमादसम्भव इति, तद्वारणाय अधिकरण-

नच तद्विषयताप्रयोज्याया मुक्ताधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वासम्भव इति वाच्यम्, वक्ष्यमाणरीत्या विशिष्टान्तरे तादृशत्व निवेशस्यावश्यकत्वात् ॥

५३. नच विशिष्टान्तरविषयित्वाप्रयोज्यत्वमात्रनिवेशेऽसम्भवः यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिसामान्ये पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः विरोधिविषयताप्रयुक्तः तद्रूपावच्छिन्नविशिष्टान्तराघटितत्वनिवेशेऽपि बाधघटितसत्प्रतिपक्षेऽव्याप्तिः पक्षसाध्यवैशिष्ट्यग्रह विरोध्युन्नायकत्वमात्रनिवेशे च वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदेऽव्याप्तिः । अतो निरुक्तसत्प्रतिपक्षलक्षणाश्रयरूपतादृशविशिष्टान्तरस्यैव निवेशनीयतया निरुक्तोभयवद्ध्रदेऽतिव्याप्तिरिति वाच्यम् ॥

---

विवेचनी

तापर्यन्तानुधावनम् । तन्निवेशे तु अधिकरणतायाः अधिकरणभेदेन भिन्नतया सत्प्रतिपक्षमात्रावगाहिबाधनिश्चयाऽसमानकालीनज्ञानोत्तरमुत्पन्नज्ञाननिष्ठाम् निरुक्ताभावाधिकरण प्रति सत्प्रतिपक्षविषयिताया एव प्रयोजकत्वम् इति नाऽसम्भवः ।

प्रतिबन्धकताऽघटितस्य निरुक्तविशिष्टान्तराऽघटितत्वदलस्य अयमनुगमः । पक्षतावच्छेदकविशिष्टधर्मवत्त्वम् ।

पक्षतावच्छेदकवैशिष्ट्यं स्वावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वाभावाधिकरणताविशिष्टत्वसम्बन्धेन । तत्राधिकरणतावैशिष्ट्यमाधेयतासम्बन्धेन । सा च स्वावच्छिन्नविषयिताप्रयुक्तत्वस्वविशिष्टविषयिताप्रयुक्तत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसम्बन्धेन तत्र द्वितीये स्ववैशिष्ट्यं स्वावच्छिन्नविषयिता शून्यप्रतीतिविषयतावच्छेदकरूपावच्छिन्ननिरूपकताकत्वसम्बन्धेन ।

५३) विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वमात्रनिवेशेऽसम्भव इति ।

ननु स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपपर्याप्तावच्छेदकताकनिरूपकताकविषयित्वाप्रयोज्यत्वस्य विवक्षणे नाऽसम्भवः, वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदत्वं तत्पर्याप्तावच्छेदकता-

५४. निरुक्तसत्यन्तमात्राश्रयत्वस्यैव विशिष्टान्तरे निवेशादुन्नायकत्वदळस्य तत्रानिवेशेन तत्रातिव्याप्तिविरहात् । बाधघटितसत्प्रतिपक्षेऽव्याप्ति वारणाय च विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्वस्वानवच्छेदकावच्छिन्नत्वोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वनिवेशात् । भेदप्रतियोगितावच्छेदकता च स्वनिरूपितप्रयोज्यतावत्त्वसम्बन्धेन । बाधविषयतानिष्ठप्रयोजकतायाश्च निरुक्तोभयसम्बन्धेन सत्प्रतिपक्षविषयतानिष्ठप्रयोजकताविशिष्टत्वेन बाध घटितसत्प्रतिपक्षेऽव्याप्तिविरहात् ॥

---

## विवेचनी

कनिरूपकताकविषयितायाः ह्रदः इत्याकारकज्ञानमात्रवृत्तितया ह्रदो वह्न्यभावव्याप्यवान् इत्याकारकसत्प्रतिपक्षज्ञानोत्तरज्ञानीयाभावाधिकरणतां प्रति प्रयोजकत्वाभावादिति चेन्न ।

तथासति मेयत्वविशिष्टे सत्प्रतिपक्षेऽतिव्याप्तिप्रसङ्गात् । मेयत्वविशिष्टवह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् वह्न्यभावव्याप्यवद्ध्रदत्वं तत्पर्याप्तावच्छेदकताकनिरूपकताकविषयितायाः मेयत्वविशिष्टसत्प्रतिपक्षावगाहिज्ञानाऽवृत्तितया तद्विषयिताप्रयोज्याधिकरणतां प्रत्यप्रयोजकत्वात् ।

५४. निरुक्तसत्यन्तमात्राश्रयत्वस्यैव विशिष्टान्तरे निवेशादिति ।

तथा च स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्ननिरूपकताकविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः विरोधिविषयताप्रयुक्तस्तद्रूपावच्छिन्नविषयिताया एव विशिष्टान्तरविषयितापदेन विवक्षितत्वात्, दोषैकदेशविषयितायाः अतथात्वेन लक्षणघटकत्वाभावात् नाऽसम्भवः।

स्वप्रयोज्याधिकरणतेति-स्वनिरूपितप्रयोज्यतावदधिकरणतेत्यर्थः ।

उभयसम्बन्धेनेति । असम्भववारणाय स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्वसम्बन्धप्रवेशः । तदनिवेशे, वह्न्यभावव्याप्यवद्ध्रदविषयितानिष्ठप्रयोजकतायाः स्वानवच्छेदकावच्छिन्नत्वसम्बन्धेन वैशिष्ट्यस्य वह्न्यभाववद्ध्रदादिरूपदोषान्तरीयविषयितानिष्ठप्रयोजकतायां सत्त्वेन दोषाऽन्तरीयविषयितानिष्ठप्रयोजकताया अपि लक्षणघटकत्वाऽसम्भवेन तथाविधप्रयोजकत्वाऽप्रसिद्धेः ।

मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिवारणाय स्वानवच्छेदकावच्छिन्नत्वसम्बन्धप्रवेशः तदनिवेशे, मेयत्वविशिष्टसत्प्रतिपक्षविषयितानिष्ठ प्रयोजकतायाः स्वप्रयोज्याधिकरण-तानिष्ठभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन वैशिष्ट्यस्य सत्प्रतिपक्षविषयिता-निष्ठप्रयोजकतायां सत्वेन सत्प्रतिपक्षविषयितायाः लक्षणघटकत्वाऽसम्भवात् बाधादिदोषान्तरीयविषयितानिष्ठप्रयोजकतायाः एव लक्षणघटकत्वात् ।

**बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय...प्रयोजकताविशिष्टान्यत्वनिवेशादिति**

ननु विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां निरुक्तोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वनिवेशेऽपि बाधघटितसत्प्रतिपक्षेऽव्याप्तिस्तदवस्थैव तथा हि- जलव्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदस्य विशिष्टान्तरतावच्छेदकं यत् समानाधिकरणजलवद्ध्रदत्वं तदवच्छिन्ननिरूपकताक या प्रकृतसत्प्रतिपक्षनिश्चयीया समानाधिकरणजलवद्ध्रदविषयिता, तन्निष्ठा य समानाधिकरणजलवद्ध्रदत्वावच्छिन्न निरूपकताकविषयितात्वावच्छिन्ना प्रयोजकता तस्याः निरुक्तोभयसम्बन्धेन सत्प्रतिपक्षविषयितानिष्ठप्रयोजकताविशिष्टत्वे लक्षणाऽघटकत्वेऽपि निरुक्तसत्प्रतिपक्षविषयितात्मकसमानाधिकरणजलवद्ध्रद-विषयितानिष्ठा या जल व्यापकसमानाधिकरणजलविषयकज्ञानविशिष्ट-समानाधिकरणजलवद्ध्रदविषयितात्वावच्छिन्ना प्रयोजकता, तस्याः प्रयोजकता-विशिष्टान्यत्वेन लक्षण घटकत्वं दुर्वारम् । तस्यां प्रयोजकतायां स्वात्मकप्रयोजकताया सत्प्रतिपक्षविषयितानिष्ठायाः वैशिष्ट्यस्य स्वानवच्छेदकेत्यादिद्वितीयसम्बन्धविरहेण विरहात् । बाधविषयितात्वावच्छिन्नप्रयोजकतायाः वैशिष्ट्यस्य तु स्वप्रयोज्याधिकरण-तेत्यादिप्रथमसम्बन्धविरहेण विरहात् । तथा च प्रयोजकता विशिष्टान्याविशिष्टान्तर-विषयितानिष्ठप्रयोजकता प्रकृतसत्प्रतिपक्षविषयिता निष्ठा जलव्यापकसमानाधिकरण-जलविषयकज्ञानविशिष्टसमानाधिकरणजलवद्ध्रदविषयितात्वावच्छिन्ना[1] प्रयोजकता तन्निरूपितप्रयोज्यताशून्यत्वं सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायां नास्तीति

न च तथापि विपरीतसत्प्रतिपक्षाद्यात्मकदोषान्तरविषयितानिष्ठप्रयोजकता-निरूपितप्रयोज्यताशून्यत्वमादाय लक्षणगमनसम्भव इति वाच्यम् ।

---

1. जलत्वावच्छिन्नविषयतानिरूपितव्यापकत्वविषयतानिरूपितसमानाधिकरण जलत्वाऽवच्छिन्नविषयताकज्ञानविशिष्टसमानाधिकरणजलत्वावच्छिन्नविषयता निरूपितह्रदत्वाऽवच्छिन्नविषयताकविषयितात्वमित्यर्थः ।

बाधादिदोषान्तरविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वमादाय मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तेर्वारणाय तथाविधप्रयोजकताकप्रयोज्यत्व-सामान्याभावस्य तादृशप्रयोज्यत्ववद्भेदस्यैव वा विवक्षणीयत्वादिति चेत् ।

उच्यते – स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपावच्छिन्न-स्वावच्छिन्नविषयताऽव्यापकविषयताशून्यज्ञानीयविषयतात्वावच्छिन्नव्यापकता-वच्छेदकरूपावच्छिन्नप्रयोजकताकत्वाभावस्यैवाऽग्रे (७६ कोटौ) विवक्षणीयतया, दर्शितबाधघटितसत्प्रतिपक्षविषयतानिष्ठाया निरूप्यनिरूपकभावापन्नसत्प्रतिपक्ष-विषयतात्वावच्छिन्नप्रयोजकतायाः बाधात्मकविशिष्टान्तरनिरूपितविषयिता-त्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वाभावेन ग्रहणाऽसम्भवात् न तां प्रयोजकता-मादायाऽव्याप्तिप्रसङ्गः । बाधविषयितात्वावच्छिन्नप्रयोजकतायास्तु ईदृशविवक्षणे-नाऽवारणात्तामादाय प्रसक्ताऽव्याप्तेर्वारकतया प्रयोजकताविशिष्टान्यत्वदलसार्थक्यं सम्भवति ।

प्रयोजकताविशिष्टान्यत्वनिवेशादिति ।

नन्वेवं सति विशिष्टान्तरे निरुक्तसत्यन्तमात्राश्रयत्वस्य निवेशनं व्यर्थम्। दोषैकदेशविषयितामादायाऽसम्भवस्य अप्रसक्तेः । ह्रदादिविषयितानिष्ठप्रयोजकतायाः प्रयोजकताविशिष्टान्यत्वदलेनैव वारणात् । यतो हि सत्प्रतिपक्षविषयिताप्रयोज्यायां पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाऽधिकरणतायां ह्रदविषयितायाः प्रयोजकत्वं तावत् जलव्यापकवह्न्यभावविषयताकनिश्चयविशिष्टजलवद्ध्रदविषयितात्वेन रूपेण । तस्यां प्रयोजकतायां, सत्प्रतिपक्षविषयितान्तःपातिजलविषयितानिष्ठा या विनिगमना-विरहसिद्धा सत्प्रतिपक्षविषयितान्तः[1] पातिजलविषयितात्वावच्छिन्ना प्रयोजकता तद्विशिष्टत्वमक्षतमेवेति चेत् ।

न । स्वविषयितात्वव्यापकरूपावच्छिन्नत्वस्य अन्यत्वप्रतियोगितावच्छेदक-प्रयोजकतायां निवेशनीयतायाः अनुपदमेव (५८तमकोटौ) वक्ष्यमाणतया सत्प्रतिपक्ष-

---

1. सत्प्रतिपक्षविषयितान्तःपातिजलविषयितात्वञ्च जलत्वावच्छिन्नविषयता-निरूपितव्यापकत्वविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयताविशिष्टा या ह्रदत्वावच्छिन्नविषयतानिरूपितजलत्वावच्छिन्नविषयता तन्निरूपितविषयितात्वमेव। वैशिष्ट्यं स्वनिरूपकनिश्चयविशिष्टनिश्चयीयत्वसम्बन्धेन । तत्र वैशिष्ट्यं स्वसामाना-धिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन ।

५५. नच-वहन्यभावव्याप्यव्याप्यजलव्यापकवहन्यभावकालीनजलाभाव-वहन्युभयवानित्यादौ तादृशजलवद्ध्रदरूपबाधेऽतिव्याप्तिः। विशिष्टाऽन्तर-

---

## विवेचनी

विषयितान्तःपातिजलविषयितात्वावच्छिन्नप्रयोजकतायाः ग्रहणाऽसम्भवात् निरुक्तसत्प्रतिपक्षविषयितात्वावच्छिन्नप्रयोजकताया एव ग्राह्यतया तद्विशिष्टान्यत्वस्य ह्रदविषयितानिष्ठप्रयोजकतायाम् अक्षततयाऽसम्भवप्रसक्तेस्तद्वारकतया सत्यन्तमात्राश्रयत्वनिवेशस्य सार्थक्यात्।

वस्तुतस्तु विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां विशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वस्य निवेशनीयताया अपि वक्ष्यमाणतया सत्प्रतिपक्षविषयितान्तःपातिह्रदविषयितानिष्ठप्रयोजकतायाः अवच्छेदकस्य वक्ष्यमाणस्याऽनाहार्यत्वसत्प्रतिपक्षविषयितादिगतसमुदायत्वस्य ह्रदत्वावच्छिन्नविषयितात्वावच्छिन्नव्यापकतावच्छेदकताविरहेण सत्प्रतिपक्षविषयितान्तःपातिह्रदविषयितानिष्ठप्रयोजकताया अपि वारणसम्भवेन सत्यन्तमात्राश्रयत्वं न निवेश्यमेव।

**विशिष्टान्तराऽघटितत्वानुगमे विशेषः-**

आधेयतावच्छेदकः द्वितीयसम्बन्धः स्वविशिष्टप्रयोजकतानिरूपितप्रयोज्यतावत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वम्। तत्र स्ववैशिष्ट्यं स्वविशिष्टधर्मावच्छिन्नविषयितानिष्ठत्वप्रयोजकताविशिष्टान्यत्वोभयसम्बन्धेन। तत्र स्ववैशिष्ट्यं स्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्वसमानकालीनप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वाभावविशिष्टत्वोभयसम्बन्धेन। तत्राभाववैशिष्ट्यमाधेयतासम्बन्धेन। सा च स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयाव्यावहितोत्तरानुमितित्वविशिष्टत्वस्वसमानकालीनविरोधिविषयिताप्रयुक्तत्वोभयसम्बन्धेन। तत्र अनुमितित्ववैशिष्ट्यं व्यापकतासम्बन्धेन। प्रयोजकतावैशिष्ट्यन्तु मूलोक्तसम्बन्धद्वयेन।

५५. विशिष्टान्तरभूतजलव्यापकवहन्यभावकालीनजलवद्ध्रदविषयितानिष्ठप्रयोजकतायाः निरुक्तोभयसम्बन्धेन बाधविषयितानिष्ठप्रयोजकताविशिष्टत्वादिति।

भूतजलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितानिष्ठप्रयोजकतायां निरुक्तोभयसम्बन्धेन बाधविषयतानिष्ठप्रयोजकताविशिष्टत्वात्, तदन्य-विशिष्टांतरविषयतानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशून्य स्वविषयता-प्रयोज्योक्ताभावाधिकरणताकत्वात् । अतो विषयितानिष्ठप्रयोजकता-यामुक्तविशेषणदानाऽसम्भवेनोक्तातिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

अथ जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितानिष्ठप्रयोजकताया बाधविषयितानिष्ठप्रयोजकताविशिष्टत्वेनाऽतिव्याप्त्यभिधानमसङ्गतम् । तत्र प्रयोजकता-विशिष्टत्वस्य दुर्घटतया प्रयोजकताविशिष्टान्यां तामेवाऽदाय अतिव्याप्तिवारणसम्भवात्। तथाहि । वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलवद्ध्रद-विषयिताप्रयोज्यायां ह्रदधर्मिकतादृशजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतायां तादृशबाधविषयितान्तःपातिन्या एव जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितायाः प्रयोजकता । सा च तादृशबाधविषयितान्तःपातिजलव्यापकवह्न्यभावकालीन-जलवद्ध्रदविषयितात्वावच्छिन्ना तादृशबाधविषयितात्वावच्छिन्नैव पर्यवस्यति । तत्र, बाधविषयितानिष्ठप्रयोजकतायाः बाधविषयितात्वावच्छिन्नायाः स्वानवच्छेदकाऽवच्छिन्नत्व-सम्बन्धविरहात् तद्घटितसम्बन्धद्वयेन वैशिष्ट्यं नास्ति । नाऽपि तत्र बाधविषयितानिष्ठा या जलव्यापकवह्न्यभावविषयकज्ञानविशिष्टजलवद्ध्रदविषयितात्वावच्छिन्ना प्रयोजकता तद्वैशिष्ट्यं सम्भवति, प्रथम सम्बन्धबाधात् । ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वा-भावाधिकरणतायां तादृशबाधविषयितात्वावच्छिन्नप्रयोजकताकत्वाभावस्य सत्त्वात् ।

नचोक्तज्ञानविशिष्टविषयितात्वेन रूपेण बाधविषयिताप्रयोज्यायां ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरभूतजलव्यापकवह्न्यभावकालीन-जलवद्ध्रदनिरूपितविषयितायाः बाधविषयितानन्तःपातिविषयितासाधारणेन जलव्यापकहन्यभावविषयताकज्ञानविशिष्टजलवद्ध्रद विषयितात्वेनैव प्रयोजकतावत्त्वात्, तस्यामेव प्रयोजकतायां बाधविषयितानिष्ठप्रयोजकतायाः बाधविषयितात्वावच्छिन्नायाः स्वानवच्छेदकावच्छिन्नत्वसम्बन्धसत्वात् वैशिष्ट्यं घटत एवेति वाच्यम् ।

तत्र तस्याः प्रयोजकतायाः स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्व-सम्बन्धविरहेण वैशिष्ट्यस्य विरहात् । बाधविषयितात्वावच्छिन्नप्रयोजकताके ह्रदधर्मिकतादृशजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणत्वे निरुक्तज्ञानविशिष्ट-

विषयितात्वावच्छिन्नप्रयोजकताकत्ववद्भेदस्य सत्त्वात् । निरुक्तज्ञानविशिष्ट-विषयितात्वावच्छिन्नप्रयोजकतायास्तु तत्र स्वानवच्छेदकावच्छिन्नत्वसम्बन्धविरहेण वैशिष्ट्यविरहादिति चेत् ।

न । वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलवद्ध्रद-विषयितान्तःपातिजलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितानिष्ठायाः ह्रदधर्मिकतादृशजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतानिरूपितप्रयोजकतायाः बाधविषयितात्वावच्छिन्नायाः वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभाव-कालीनजलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वेन रूपेण बाधविषयितानिष्ठजलव्यापक-वह्न्यभावविषयताकज्ञानविशिष्टजलवद्ध्रदविषयितात्वावच्छिन्नप्रयोजकता-विशिष्टत्वसम्भवात् ।

उक्तज्ञानविशिष्टविषयितात्वावच्छिन्नप्रयोजकताके ह्रदधर्मिकवह्निवैशिष्ट्या-वगाहित्वाभावाधिकरणत्वे वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीन-जलवद्ध्रदविषयितानिष्ठप्रयोजकताकत्ववद्भेदस्य विरहेण, प्रथमसम्बन्धस्य सूपपादत्वात्। ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति जलव्यापकवह्न्य-भावकालीनजलवद्ध्रदविषयितायाः येन जलव्यापकवह्न्यभावविषयताकनिश्चयविशिष्ट-जलवद्ध्रदविषयितात्वेन रूपेण प्रयोजकत्वं, वह्न्यभावव्याप्यव्याप्यजलव्यापक-वह्न्यभावकालीनजलवद्ध्रदविषयितायाः तद्रूपाक्रान्तत्वेन तद्रूपावच्छिन्नप्रयोजकता-वत्तया, वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितानिष्ठ-प्रयोजकताकत्ववती न इतिप्रमात्मकप्रत्ययेन वह्न्यभावव्याप्यव्याप्यजल-व्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वेन रूपेण तस्याः प्रयोजकतायाः विषयीकरणात्, तन्निरूपितप्रयोज्यतावत्यां ह्रदधर्मिकवह्नि-वैशिष्ट्यावगाहित्वाभावाधिकरणतायामेतत्प्रतीत्यनुदयात् बाधविषयिता-त्वावच्छिन्नप्रयोजकतायां निरुक्तज्ञानविशिष्टविषयितात्वावच्छिन्नप्रयोजकतायाः स्वानवच्छेदकावच्छिन्नत्वसम्बन्धेन वैशिष्ट्यं तु सुस्पष्टमेव ।

स्ववृत्तित्वस्ववृत्तिरूपावच्छिन्न...जनकतावृत्तित्वोभयसम्बन्धेन विरोधि-विषयताप्रयोज्यतावच्छेदकरूपविशिष्टरूपवत्त्वस्यैव लक्षणत्वसम्भवादिति ।

इदमत्र बोद्ध्यम् । विशिष्टान्तराऽघटितत्वदलाऽघटितस्यैव लक्षणस्य अयमनुगमः तत्रापि बाधसत्प्रतिपक्षोन्नायकवारकदलद्वयस्यैवाऽनुगमोऽयम् । पक्षाप्रसिद्धिसाध्य-

५६. उक्तविशेषणदानेऽपि वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयवानित्यत्र वह्न्यभावव्याप्यव्याप्यवद्ध्रदेऽतिव्याप्तेर्दुर्वारतया यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयताप्रयोज्यतावच्छेदकयद्रूपविशिष्टः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति, यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयताप्रयोज्यतावच्छेदकतद्रूपविशिष्टः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयतातद्रूपावच्छिन्नत्वस्यैव विवक्षणीयतया पूर्वोक्तबाधेऽतिव्याप्त्यनवकाशात् ।

---

## विवेचनी

प्रसिद्ध्योरनेनाऽवारणात् । काञ्चनमयत्वाभावव्याप्यवद्ध्रदविषयितात्मकविरोधिविषयिताप्रयोज्यतावच्छेदकं यत् काञ्चनमयत्वाऽवच्छिन्नह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वं तद्विशिष्टत्वस्य काञ्चनमयत्वाभावव्याप्यवद्ध्रदत्वादौ सत्त्वात् । काञ्चनमयत्वाभावव्याप्यवद्ध्रदविषयितायाः काञ्चनमयत्वाभाववद्ध्रदविषयितायाश्च काञ्चनमयह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावं प्रति व्यापकाभावप्रयोजकस्येत्यादिरीत्या प्रयोजकताया अक्षतत्वात् । व्यापकाभावप्रयोजकस्येत्यादिरीत्या प्रयोजकताऽभिप्रायेणैव पूर्वं (५१ कोटौ) पक्षाप्रसिद्धिसाध्याप्रसिद्धिवारणाय दलद्वयस्य निवेशात् । तदुभयवारकविशेषणघटितलक्षणानुगमस्तु विरोधिविषयताविशिष्टरूपवत्त्वमिति। तत्र वैशिष्ट्यं –

१. स्वनिरूपितप्रयोज्यतावच्छेदकरूपविशिष्टत्व–
२. आधेयतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व–
३. स्वावच्छेदकत्वैतत्सम्बन्धत्रयेण ।

तत्र प्रथमे रूपवैशिष्ट्यं मूलोक्तसम्बन्धद्वयेन । द्वितीये आधेयतास्वसेत्यादिव्यापकतासम्बन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वनिरूपितप्रयोज्यतावत्प्रकृतपक्षधर्मिकपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रकृतसाध्यधर्मिकसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावान्यतराधिकरणतावत्त्व –

नचाऽननुगमः । स्ववृत्तित्वस्ववृत्तिरूपावच्छिन्नविषयित्वाऽवच्छिन्नाऽनुमितिनिष्ठजन्यतानिरूपितजनकतावृत्तित्वोभयसम्बन्धेन विरोधिविषयताप्रयोज्यतावच्छेदकरूपविशिष्टरूपवत्त्वस्यैव लक्षणत्वसम्भवात् ।

प्रथमस्ववृत्तित्वञ्च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वनिष्ठावच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । स्वाधिकरणता च स्वावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वविशिष्टविरोधिविषयताप्रयुक्तत्वविशिष्टपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतावत्त्वसम्बन्धेन । जनकतावृत्तित्वञ्च स्वावच्छिन्नविषयत्वव्यापकत्व सम्बन्धेन । द्वितीयवृत्तित्वमप्यनेनैव सम्बन्धेन ॥

---

## विवेचनी

सम्बन्धेन ।

तथा च काञ्चनमयत्वाभावव्याप्यवद्ध्रदादिविषयितात्मकविरोधि विषयिताया निरुक्तद्वितीयसम्बन्धेन वैशिष्ट्यस्य काञ्चनमयत्वाभाव- व्याप्यवद्ध्रदत्वादौ विरहा पक्षाप्रसिद्ध्यादेर्वारणम् । घटवद्भूतल विषयतायाः चरमसम्बन्धद्वयेन वैशिष्ट्यस घटवद्भूतलत्वे सत्वात् तद्वत उदासीनस्य वारणाय प्रथमसम्बन्धप्रवेशः वह्न्यभावव्याप्यवद् ध्रदविषयतात्मकविरोधिविषयतायाः निरुक्ताऽऽद्यसम्बन्धद्वयेन[1] वैशिष्ट्यस्य काञ्चनमयत्वाभावव्याप्यवद्ध्रदत्वे सत्त्वात् तद्दोषतादवस्थ्यवारणाय तृतीय सम्बन्धप्रवेशः ।

---

1. वह्न्यभावव्याप्यवद्ध्रदविषयतात्मकविरिधिविषयताप्रयोज्यतावच्छेदकरू काञ्चनमयत्वावच्छिन्नह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वं, तद्विशिष्टत्वस काञ्चन मयत्वाभावव्याप्यवद्ध्रदत्वे सत्वात् स्वनिरूपितेत्यादिप्रथमसम्बन्धे वैशिष्ट्यं बोध्यम् ।

५७. नचोक्तविशेषणदाने ह्रदो वह्निधूमोभयवानित्यादौ जलव्यापक-वह्न्यभावसमानाधिकरणजलव्यापकधूमाभावसमानाधिकरणतादृशजलवद्-ध्रदात्मकसत्प्रतिपक्षघटके सत्प्रतिपक्षे मेयत्वविशिष्टेऽतिव्याप्तिः, विशिष्टाऽन्तरभूतावान्तरसत्प्रतिपक्षविषयितानिष्ठप्रयोजकताया-मुक्तोभयसम्बन्धेन महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकताविशिष्ट-त्वादितिवाच्यम् ॥

---

विवेचनी

५७) विशिष्टान्तरभूतावान्तरसत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायाः उक्तोभयसम्बन्धेन महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकताविशिष्टत्वादिति।

नन्वेतदसङ्गतम् । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितानिष्ठ-प्रयोजकतायां महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकतावैशिष्ट्यस्य दुर्घटत्वात् । तथाहि। अवान्तरसत्प्रतिपक्षविषयितानिष्ठायाः ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरण-तानिरूपितप्रयोजकतायाः अवान्तरसत्प्रतिपक्षविषयितात्वावच्छिन्नत्वेन तत्र महासत्प्रति-पक्षविषयितात्वावच्छिन्नप्रयोजकतायाः स्वानवच्छेदकावच्छिन्नत्वसम्बन्धस्य सत्त्वेऽपि स्वप्रयोज्येत्यादिप्रथमसम्बन्धो न घटते । महासत्प्रतिपक्षविषयितात्वावच्छिन्नप्रयोजक-ताके ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणत्वे अवान्तरसत्प्रतिपक्षविषयिता-त्वावच्छिन्नप्रयोजकताकत्ववद्भेदस्य सत्त्वादिति चेत् ।

न । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वेन रूपेणाऽवान्तरसत्प्रतिपक्षविषयितात्वावच्छिन्नप्रयोजकतायाः सम्बन्धद्वयेन महासत्प्रतिपक्ष,वषयितात्वावच्छिन्नप्रयोजकताविशिष्टत्वसम्भवात् । महासत्प्रतिपक्ष-विषयिताप्रयोज्यायां ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतायां जलव्यापक-वह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितात्वावच्छिन्नप्रयोजकताकत्ववद्भेदस्य सत्त्वेऽपि जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितानिष्ठप्रयोजकता-कत्ववद्भेदस्य विरहात् । तथा हि- ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति महासत्प्रतिपक्षविषयितायाः जलव्यापकवह्न्यभावसमानाधिकरणजल व्यापको धूमाभावः इतिज्ञानविशिष्टं यत् जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रदः इतिज्ञानं तदीयजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितासाधारणेन

५८. स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्यत्वस्यैव विशिष्टान्तरविषयतानिष्ठप्रयोजकतायां निवेशनीयत्वान्महासत्प्रति-पक्षविषयितानिष्ठप्रयोजकताया मेयत्वविशिष्टावान्तरसत्प्रतिपक्ष-विषयितात्वव्यापकरूपानवच्छिन्नतया निरुक्तप्रयोजकताविशिष्टान्यत्वस्य विशिष्टान्तरभूतनिरुक्तावान्तरसत्प्रतिपक्षविषयितानिष्ठप्रयोजक-तायामक्षतत्वेन मेयत्वविशिष्टे तत्रातिव्याप्तिविरहात् ॥

---

## विवेचनी

जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकधूमाभावविषयताकज्ञानविशिष्ट-जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रद- विषयितात्वेनैव प्रयोजकतावत्तय समानाकारकज्ञानेषु विषयिताभेदस्य चाप्रामाणिकतया जलव्यापकवह्न्यभाव-समानाधिकरणजलवान् ह्रदः इत्याकारकज्ञानीयाऽवान्तरसत्प्रतिपक्षविषयिताया तद्रूपाऽक्रान्ततया तद्रूपावच्छिन्नप्रयोजकतावत्त्वमक्षतम् । तथा च जलव्यापक-वह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितानिष्ठप्रयोजकतावती न इ प्रमात्मकप्रतीत्या जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयिता-निष्ठप्रयोजकतात्वेन रूपेण निरुक्तमहासत्प्रतिपक्षविषयित्वीयप्रयोजकताया तादृशज्ञानविशिष्टविषयितात्वावच्छिन्नायाः विषयीकरणात्, नैतत्प्रतीतिसाक्षिकभेद ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सम्भवति । इत्थञ्च अवान्तर सत्प्रतिपक्षविषयितानिष्ठायां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणता-निरूपितायां जलव्यापकवह्न्यभावविषयताकज्ञानविशिष्टजलवद्ध्रद विषयितात्वावच्छिन्नायां प्रयोजकतायां जलव्यापकवह्न्यभावसमानधिकरण जलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वेन रूपेण महासत्प्रतिपक्षविषयित्वीय प्रयोजकतायाः स्वप्रयोज्याधिकरणतेत्यादिप्रथमसम्बन्धस्य, जलव्यापकवह्न्यभाव विषयताकज्ञानविशिष्टजलवद्ध्रदविषयितात्वावच्छिन्नत्वेन रूपेण स्वानवच्छेदकावच्छिन्न त्वरूपद्वितीयसम्बन्धस्य च अक्षततया तदुभयसम्बन्धेन वैशिष्ट्यं निष्प्रत्यूहम् इति

५८) स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्यत्वस्यै निवेशनीयत्वादिति ।

नन्वेवं निवेशे उक्तोभयसाध्यके महासत्प्रतिपक्षेऽव्याप्तिः दुर्वारैव

महासत्प्रतिपक्षविषयिताप्रयोज्यायां ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतायां अवान्तरसत्प्रतिपक्षविषयितायाः महासत्प्रतिपक्ष विषयितान्तःपातिविषयितागतेन रूपेणैव प्रयोजकतावत्वात् । तस्याः प्रयोजकतायाः महासत्प्रतिपक्षविषयित्वीयप्रयोजकता-विशिष्टान्यत्वेन लक्षणघटकत्वात् । विशिष्टान्तरभूतो यः अवान्तरसत्प्रतिपक्षः तद्विषयिता-निष्ठा या महासत्प्रतिपक्षविषयितान्तःपातिविषयितागतसमुदायत्वावच्छिन्ना प्रयोजकता,[1] तस्यां, महासत्प्रतिपक्षविषयितात्वव्यापकीभूतं यत् महासत्प्रतिपक्षविषयित्वीय-समुदायत्वं तदवच्छिन्नप्रयोजकतायाः वैशिष्ट्यस्य स्वानवच्छेदकावच्छिन्नत्व-सम्बन्धविरहेण विरहात् । असम्भवस्य तु[2] विशिष्टान्तरे सत्यन्तमात्राश्रयत्वं निवेश्य वारणसम्भवादिति चेत् ।

न । महासत्प्रतिपक्षविषयितात्वव्यापकीभूतं यत् अवान्तरसत्प्रतिपक्षविषयित्वीय-समुदायत्वं तदवच्छिन्नप्रयोजकताविशिष्टत्वस्यैव महासत्प्रतिपक्षविषयितान्तःपात्यवान्तर-सत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायां सत्वेन तस्याः प्रयोजकतायाः लक्षणाऽघटकत्वात्। महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायाः मेयत्वविशिष्टावान्तरसत्प्रतिपक्ष-विषयितात्वव्यापकरूपाऽनवच्छिन्नतयेति ।

—अत्रेदं बोद्ध्यम्—महासत्प्रतिपक्षविषयितायाः महासत्प्रतिपक्षविषयितात्वेन रूपेण ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकत्वम् । तच्च रूपं मेयत्वविशिष्टावान्तरसत्प्रतिपक्षविषयितात्वव्यापकं न भवति, जलव्यापकवह्न्यभाव-समानाधिकरणजलवद्ध्रदः प्रमेयः इत्याकारकज्ञानीयमेयत्वविशिष्टावान्तरसत्प्रतिपक्ष-विषयितायां महासत्प्रतिपक्षविषयितात्व विरहात् ।

वक्ष्यमाणरीत्या महासत्प्रतिपक्षविषयितायाः जलव्यापकवह्न्यभाव-समानाधिकरणजलव्यापकताप्रकारकधूमाभावनिश्चयवैशिष्ट्यजलव्यापकवह्न्यभाव-समानाधिकरणजलवद्ध्रदविषयितानिश्चयत्वानाहार्यत्वसाधारणसमुदायत्वेन प्रयोजकतायां तु यथाश्रुतमिदं न सङ्गच्छते । महासत्प्रतिपक्षविषयित्वीयप्रयोजकतावच्छेदकरूपस्य निरुक्तसमुदायत्वस्याऽवान्तरसत्प्रतिपक्षविषयितासाधारणस्य मेयत्वविशिष्टाऽवान्तर-सत्प्रतिपक्षविषयितात्वव्यापकत्वाऽनपायात् ।

---

1. महासत्प्रतिपक्षविषयित्वीयप्रयोजकत्वपर्यवसिता ।
2. सत्प्रतिपक्षविषयितान्तःपातिपक्षविषयितानिष्ठां सत्प्रतिपक्षविषयित्वीय-प्रयोकतामादायासम्भवप्रसक्तिर्बोध्या ।

५९. नच ह्रदो वह्निमान् धूमादित्यत्र ह्रदवृत्तिवह्निव्यापकीभूताभाव-प्रतियोगिजले मेयत्वविशिष्टेऽतिव्याप्तिः, तत्र वह्निव्यापकीभूताभाव-प्रतियोगिजलं ह्रदवृत्तिजल मितिज्ञानयोः परस्परविशिष्टत्वेन प्रतिबन्धकताद्वयस्य स्वीकरणीयतया तथैव विनिगमनाविरहेण प्रयोजकताद्वयस्यापि परस्परानवच्छेदकावच्छिन्नस्य स्वीकरणीयतया द्वयोरपि प्रयोजकतयोः निरुक्तोभयसम्बन्धेन परस्परविशिष्टतया प्रयोजकताविशिष्टान्यविशिष्टान्तरविषयितानिष्ठप्रयोजकतानिरूपित-प्रयोज्यताशून्यत्वस्य स्वविषयताप्रयोज्यपक्षधर्मिकसाध्यवैशिष्ट्या-वगाहित्वाभावाधिकरणतायाम् अक्षतत्वात् ।

---

## विवेचनी

तथापि वक्ष्यमाणरीत्या विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां स्वावच्छिन्न-विषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वस्य विवक्षणात् नाऽसंगतिः मेयत्वविशिष्टावान्तरसत्प्रतिपक्षविषयितावति निश्चयान्तराऽसमानकालीने जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदः प्रमेयः इतिनिश्चये तादृशजल-व्यापकताप्रकारकधूमाभावविषयकनिश्चयवैशिष्ट्यविरहेण तत्समुदायस्य विरहात् तत्समुदायत्वस्य मेयत्वविशिष्टाऽवान्तरसत्प्रतिपक्षविषयिताव्यापकतावच्छेदक-त्वविरहात् ।

विशिष्टान्तराऽघटितत्वानुगमे विशेषः-

आधेयतावच्छेदकद्वितीयसम्बन्धे स्ववैशिष्ट्यं प्रयोजकतायां स्वविशिष्टधर्मावच्छिन्न-विषयितानिष्ठत्वस्वविशिष्टप्रयोजकताविशिष्टान्यत्वोभयसम्बन्धेन । प्रथमे स्ववैशिष्ट्यं पूर्वोक्तमेव । द्वितीये स्ववैशिष्ट्यं स्वावच्छिन्ननिरूपकताकविषयितात्वव्यापक-रूपावच्छिन्नत्वसम्बन्धेन ।

५९) ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजले मेयत्वविशिष्टे-ऽतिव्याप्तिरिति ।

नन्वत्र अतिव्याप्त्यभिधानमनुपपन्नम् । यतो हि महासत्प्रतिपक्षघटके अवान्तरसत्प्रतिपक्षे मेयत्वविशिष्टेऽतिव्याप्तेर्वारणाय स्वविषयितात्वव्यापक-रूपावच्छिन्नत्वस्य अन्यत्वप्रतियोगितावच्छेदकीभूतप्रयोजकतायाम् अवश्यं निवेशनीय-

स्वविषयतानिष्ठप्रयोजकतायामपि निरुक्तसम्बन्धेन प्रयोजकता-विशिष्टान्यत्वस्य निवेशे च तत्रैव लक्ष्यभूते ह्रदवृत्तिवह्निव्यापकी-भूताभावप्रतियोगिजलेऽव्याप्तिरिति वाच्यम् ॥

---

## विवेचनी

तायाः पूर्वकोटौ(५८) प्रदर्शिततया, मेयत्वविशिष्टसत्प्रतिपक्षज्ञानीया या ह्रदवृत्ति-वह्निव्यापकीभूताभावप्रतियोगिजलविषयिता तन्निष्ठप्रयोजकतायां मेयत्वविशिष्टह्रद-वृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकता-वैशिष्ट्यस्य सत्त्वे एवातिव्याप्तिरुपपद्यते । तदेव न घटते । वह्निव्यापकीभूताभावप्रति-योगिजलविषयितानिष्ठप्रयोजकतायां ह्रदवृत्तिजलविषयताकज्ञानविशिष्टवह्निव्यापकी-भूताप्रतियोगिजलविषयितात्वावच्छिन्नायां वह्निव्यापकीभूताभावप्रतियोगिजलविषयता-कज्ञानविशिष्टह्रदवृत्तिजलविषयतात्वावच्छिन्नायाः प्रयोजकतायाः वैशिष्ट्यस्य सत्त्वेऽपि, अस्याः प्रयोजकतायाः मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजल-विषयितात्वव्यापकरूपावच्छिन्नत्वाऽभावेन लक्षणाऽघटकत्वात् । वह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितायां ह्रदवृत्तिजलविषयितात्वस्य विरहात् । ह्रदवृत्तिजलविषयिताक-ज्ञानविशिष्टवह्निव्यापकीभूताप्रतियोगिजलविषयितात्वस्य तु मेयत्वविशिष्टह्रदवृत्तिवह्नि-व्यापकीभूताभावप्रतियोगिजलविषयितात्वव्यापकत्वेन तदवच्छिन्नप्रयोजकतायाः लक्षणघटकत्वेऽपि, मेयत्वविशिष्टसत्प्रतिपक्षज्ञानीयह्रदवृत्तिवह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितानिष्ठायां ह्रदवृत्तिजलविषयताकज्ञानविशिष्टवह्निव्यापकी-भूताभावप्रतियोगिजलविषयितात्वाऽवच्छिन्नायां प्रयोजकतायां तद्वैशिष्ट्यस्य स्वानव-च्छेदकावच्छिन्नत्वसम्बन्धविरहेण विरहात् । तथा च तामेव प्रयोजकतां ह्रदवृत्तिवह्नि-व्यापकीभूताभावप्रतियोगिजलविषयितानिष्ठां मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकी-भूताभावप्रतियोगिजलविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्याम् आदाय अतिव्याप्तिवारणं सुकरमेवेति चेत् ।

अत्रोच्यते- मेयत्वविशिष्टनिरुक्तसत्प्रतिपक्षज्ञानीयजलविषयितायां प्रयोजकता-कद्वयस्यापि सत्त्वेनातिव्याप्तिदानमुपपद्यते ।

तथाहि वह्निव्यापकीभूताभावप्रतियोगिजलम् इति निश्चयकालीनं यत् ह्रदवृत्ति-जलम् इति ज्ञानं, तदीयह्रदवृत्तिजलविषयितायाः प्रयोजकत्वं तावद्वह्निव्यापकी-

भूताभावप्रतियोगिजलविषयताकनिश्चयह्रदत्वावच्छिन्नविषयतानिरूपितवृत्तित्व-विषयतनिरूपितजलत्वावच्छिन्नविषयताकविषयितानिश्चयत्वसाधारणसमुदायत्वेन रूपेण तद्रूपं जलत्वावच्छिन्ने ह्रदवृत्तित्वावगाहिज्ञानीयायां जलविषयितायां भवति । ह्रदवृत्ति-वह्निव्यापकीभूताभावप्रतियोगिजलं प्रमेयम् इत्याकारकप्रकृतमेयत्वविशिष्ट-सत्प्रतिपक्षविषयकज्ञानस्यापि जलत्वावच्छिन्ने ह्रदवृत्तित्वावगाहितया एतदीयजल-विषयितायाः ह्रदवृत्तिजलविषयितात्मकत्वेन निरुक्तसमुदायत्वाश्रयतया तदवच्छिन्न-प्रयोजकतावत्वमक्षतमेव । ह्रदवृत्तिजलम् इति निश्चयकालीनं यत् वह्निव्यापकी-भूताभावप्रतियोगिजलम् इतिज्ञानं, तदीयवह्निव्यापकीभूताभावप्रतियोगिजल-विषयितायाः प्रयोजकत्वं ह्रदवृत्तिजलविषयताकनिश्चयवह्नित्वावच्छिन्नविषयतानिरूपित-व्यापकत्वविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितप्रतियोगितात्वावच्छिन्न-विषयतानिरूपितजलत्वावच्छिन्नविषय ताकविषयितानिश्चयत्वसाधारणसमुदायत्वेन रूपेण तद्रूपस्य वह्निव्यापकीभूताभावप्रतियोगिजलम् इत्याकारकज्ञानीयजलविषयितायामपि ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलं प्रमेयम् इत्याकारकप्रकृतमेयत्वविशिष्ट-सत्प्रतिपक्षविषयकज्ञानीयजलविषयितायां सत्वेन, अस्याः विषयितायाः तद्रूपावच्छिन्न-प्रयोजकत्वमप्यक्षतम् । तथाच मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितात्वव्यापकं रूपं निरुक्तं द्वयमपि समुदायत्वम् । तदवच्छिन्न-प्रयोजकता द्वय्यपि प्रयोजकता । तत्र वह्निव्यापकीभूताभावप्रतियोगिजल-विषयताकनिश्चयह्रदवृत्तिजलविषयितागतसमुदायत्वावच्छिन्ना ह्रदवृत्तिजलविषयितानिष्ठ-या प्रयोजकता तद्वैशिष्ट्यं मेयत्वविशिष्टसत्प्रतिपक्षविषयितान्तःपातिवह्नि-व्यापकीभूताभावप्रतियोगिजलविषयतासाधारणसमुदायत्वावच्छिन्नप्रयोजकतायां वर्तते अतो नास्याः प्रयोजकतायाः निरुक्तप्रयोजकता विशिष्टान्यत्वेन ग्रहणसम्भवः मेयत्वविशिष्टसत्प्रतिपक्षज्ञानीयह्रदवृत्तिजलविषयतासाधारण समुदायत्वावच्छिन्न-प्रयोजकतायां तु मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजल-विषयितात्वव्यापकं यत् ह्रदवृत्तिजलविषयताकनिश्चयवह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितानिश्चयत्वगतसमुदायत्वं तदच्छिन्नप्रयोजकतावैशिष्ट्यम् अक्षतम् अतो न तस्या अपि प्रयोजकतायाः लक्षणघटकत्वसम्भवः ।

इत्थञ्च मेयत्वविशिष्टनिरुक्तसत्प्रतिपक्षज्ञानीयह्रदवृत्तिवह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितानिष्ठयोः द्वयोरपि प्रयोजकतयोः लक्षणघटकत्वाऽसम्भवे

६०. स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यत्वनिरूपितत्वस्यापि निरुक्तप्रयोजकतावैशिष्ट्यघटकतया निवेशात् । उक्तस्थले चोक्त-प्रयोजकताद्वयस्यापि परस्परनिरूपितप्रयोज्यत्वाभावसमानाधिकरण-प्रयोज्यत्वाऽनिरूपितत्वेन निरुक्तप्रयोजकताविशिष्टान्यत्वस्याक्षततया उक्तातिव्याप्त्यनवकाशात् ॥

---

## विवेचनी

बाधादिविषयित्वीयप्रयोजकतामादाय लक्षणगमनसम्भवादतिव्याप्त्यभिधानमुपपद्यते ।

अत एव ग्रन्थकृद्भिः मेयत्वविशिष्टं वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रद-मुपेक्ष्य मेयत्वविशिष्टे ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगि जलेऽतिव्याप्तिरभ्यधायि। तत्र वह्निव्यापकीभूताभावप्रतियोगिजल विषयितायाः जलवद्ध्रदविषयितायाश्च द्वयोः विनिगमनाविरहेण प्रत्येकं प्रयोजकतासिद्धावपि, एकस्याः विषयितायाः प्रयोजकता-द्वयाश्रयत्वाभावेन, निरुक्तमेयत्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रद-विषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतावह्निव्यापकीभूताभावप्रयोगिजलविषयिता-शालिनिश्चयजलवद्ध्रदविषयितादिगतसमुदायत्वावच्छिन्नप्रयोजकता एकैवेति तद्विशिष्टान्यत्वस्य तस्यामेव वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदविषयितानिष्ठ-प्रयोजकतायां प्रसिद्धेः, तामादायैव मेयत्वविशिष्टे तत्र अतिव्याप्तिवारण सम्भवात् ।

इदमुपलक्षणम्- मेयत्वविशिष्टे ह्रदवृत्तिजलव्यापकवह्न्यभावसमानाधिकरण-जलेऽप्यतिव्याप्तिः भवति । ह्रदवृत्तिजलविषयितायाः जलव्यापकवह्न्यभाव-समानाधिकरणजलविषयितायाश्च विनिगमनाविरहेण प्रयोजकताद्वयस्य परस्परानव-च्छेदकावच्छिन्नस्याऽवश्यकत्वात् । ह्रदवत्तिजलव्यापकवह्न्यभावसमानाधिकरण-जलविषयितायाः ह्रदवृत्तिजलविषयिताजलव्यापकवह्न्यभावसमानाधिकरण-जलविषयितोभयात्मकत्वाच्च ।

ननु मेयत्वविशिष्टे जलव्याकवह्न्यभावसमानाधिरणजलवद्ध्रदेऽतिव्याप्तिसम्भव इति ॥

६०) स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यत्वनिरूपितत्वस्यापीति ।

अत्रेदं बोद्ध्यम् । प्रयोजकतावैशिष्ट्यघटकतया स्वप्रयोज्यत्वाभावसमाना-धिकरणप्रयोज्यतानिरूपितत्वस्य निवेशे सति स्वानवच्छेदकावच्छिन्नत्वस्य निवेशो

६१. नच विशिष्टान्तरे जनकत्वप्रयोजकत्वोभयघटिततादृशत्वाऽनिवेशे व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिः । प्रतिहेतुव्यापक-साध्याभावसमानकालीनप्रतिहेतुमत्पक्षस्यापि विशिष्टान्तरत्वसम्भवेन तद्विषयताप्रयोज्यत्वस्य सत्प्रतिपक्षविषयताप्रयोज्योक्तोभावाधिकरण-तायां सत्वात्, अतस्तादृशत्वनिवेशनमावश्यकमिति वह्न्यभावेत्युक्तो-भयवद्ध्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

---

विवेचनी

नावश्यकः । मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्ति वारणाय तस्य निवेशिततया इदानीं स्वप्रयोज्यत्वाभावसमानाधिकरणेत्यादि दलेनावश्यं निवेशनीयेन तदतिव्याप्तेः वारणात् विशिष्टान्तरभूतसत्प्रतिपक्षनिरूपितविषयितानिष्ठप्रयोजकतायां मेयत्वविशिष्टसत्प्रतिपक्ष-विषयितानिष्ठप्रयोजकतायाः वैशिष्ट्यस्य स्वप्रयोज्य- त्वाभावसमानाधिकरणप्रयोज्यत्व-निरूपितत्वसम्बन्धविरहेण विरहात्, सत्प्रतिपक्षविषयितानिष्ठप्रयोजकताया लक्षणघटकत्वनिर्वाहात् । सत्प्रतिपक्षघटकबाधविषयितानिष्ठप्रयोजकतायां च सत्प्रतिपक्षविषयिता- निष्ठप्रयोजकतायाः तेन सम्बन्धेनापि वैशिष्ट्यस्य अक्षततया सत्प्रतिपक्षघटकबाधविषयितानिष्ठप्रयोजकतायाः लक्षणघटकत्वाऽभावे बाधघटितसत्प्रतिपक्षे अव्याप्तिविरहाच्च ।

६१) प्रतिहेतुव्यापकसाध्याभावसमानकालीनप्रतिहेतुमत्पक्षस्यापि-विशिष्टान्तरत्वसम्भवेन तद्विषयताप्रयोज्यत्वस्य सत्प्रतिपक्षविषयता-प्रयोज्योक्ताभावाधिकरणतायां सत्वादिति ।

अथ सत्प्रतिपक्षनिश्चयोत्तरमुत्पन्नज्ञानीयां पक्षधर्मिकसाध्यवैशिष्ट्याव-गाहित्वाभावाधिकरणतां प्रति तदव्यवहितपूर्वज्ञानीयायाः एव सत्प्रतिपक्षविषयिताया प्रयोजकता, न तु व्यवहितपूर्वज्ञानीयायाः प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतु-मत्पक्षादिविषयितायाः । अव्यवहितपूर्वोत्तरवृत्त्योः एव प्रयोज्यप्रयोजकभावसम्भवात् कार्यकारणभावस्येव । तथा च सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणताया-कालीनत्वघटितविशिष्टविषयितायाः प्रयोजकतोपगमेनाव्याप्त्यभिधानं ग्रन्थकृता असङ्गतम् ।

न च कालीनत्वघटितविशिष्टविषयकज्ञानीयायाः अपि प्रतिहेतुव्यापक-साध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायाः स्वाश्रयज्ञानाव्यवहितोत्तरोत्पन्नज्ञाननिष्ठां पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकता सम्भवत्येव, तयोरव्यवहितपूर्वोत्तरज्ञानवृत्तित्वादिति वाच्यम् ।

निरुक्तकालीनत्वाऽवगाहिज्ञानीयविषयितायाः ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वा-भावाधिकरणतात्वावच्छिन्नं प्रति प्रयोजकतासम्भवेऽपि ज्ञानान्तरविरहकालीन-सत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरमुत्पन्नज्ञानमात्रनिष्ठां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वा-भावाधिकरणताव्यक्तिं प्रति प्रयोजकतायाः असम्भवात् ।

न च सत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायाः कालीनत्वघटितोक्तविशिष्टविषयिता-निष्ठप्रयोजकतायाश्च अवच्छेदकरूपैक्यात् तदुभयनिष्ठप्रयोजकतैक्यमिति स्वयं ग्रन्थकृद्भिरेव समाधास्यमानत्वात् सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतां प्रति कालीनत्वघटितोक्तविशिष्टविषयितायाः प्रयोजकत्वं सुघटमेवेति वाच्यम् ।

ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतात्वावच्छिन्नं प्रति तदुभयनिष्ठप्रयोजकतयोरवच्छेदकैक्येऽपि, सत्प्रतिपक्षमात्रावगाहिज्ञानोत्तर-ज्ञाननिष्ठाधिकरणताव्यक्तिं प्रति अप्रयोजकीभूतकालीनत्वघटितविशिष्ट-विषयितासाधारणरूपस्य प्रयोजकतावच्छेदकत्वाऽसम्भवेन सत्प्रतिपक्ष-विषयितानिष्ठप्रयोजकतावच्छेदकरूपस्य कालीनत्वघटितविशिष्टविषयिता-निष्ठप्रयोजकतायाः अवच्छेदकरूपेण ऐक्यस्य दुर्घटत्वात् ।

न च तर्हि तादृशाधिकरणतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतायाः अवच्छेदकरूपस्य उक्तोभयविधविषयितासाधारण्येन प्रयोजकतैक्यात् सत्प्रतिपक्ष-विषयिताप्रयोज्याधिकरणतात्वावच्छिन्नं प्रति व्यवहितपूर्वज्ञानीयायाः अपि कालीनत्व-घटितविशिष्टविषयितायाः प्रयोजकत्वमुपपन्नमिति वाच्यम् ।

पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतात्वावच्छिन्नप्रयोज्यताकत्वस्य विशिष्टान्तरभूतबाधादिविषयितायां सत्वेन असम्भवभिया, अधिकरणतापर्यन्तानु-धावनस्य वैयर्थ्येन च पक्षधर्मिकसाध्यवैशिष्ट्याऽवगाहित्वाभावाधिकरणतात्वावच्छिन्ने विशिष्टान्तरविषयिताऽप्रयोज्यत्वस्वावच्छिन्नविषयिताप्रयोज्यत्वयोः विवक्षणाऽसम्भवात्।

न च समानाकारकज्ञानेषु विषयिताभेदस्याऽप्रामाणिकतया सत्प्रतिपक्षविषयितायाः कालीनत्वघटितविशिष्टावगाहिज्ञानकालीनसत्प्रतिपक्षज्ञानेऽपि विद्यमानतया

तदुत्तरज्ञाननिष्ठां पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिं प्रति कालीनत्वघटितविशिष्टविषयितायाः सत्प्रतिपक्षविषयितायाश्च प्रयोजकत्वं सम्भवत्येवेत्य-व्याप्तिदानसङ्गतिरिति वाच्यम् ।

ज्ञानान्तराऽसमानकालीनसत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरमुत्पन्नज्ञाननिष्ठा पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिमादाय लक्षणगमनसम्भवे तत्परित्यागस्य सिद्धमन्नमितिन्यायेन हेयत्वात्, अधिकरणतापर्यन्तानुधावनस्य वैयर्थ्याच्चेति चेत् ।

अत्रोच्यते– ज्ञानान्तराऽसमानकालीनसत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरम् उत्पन्नघटादिज्ञाननिष्ठां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिं प्रति तत्पूर्ववृत्तितया सत्प्रतिपक्षज्ञानीयविषयिताया इव विनिगमनाविरहेण तत्पूर्वकालीनान पदार्थान्तराणामपि प्रयोजकतायाः प्राप्तावपि, ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वा-भावत्वावच्छिन्नाधेयतानिरूपितैतदधिकरणतातो अन्यत्र सत्प्रतिपक्षज्ञानोत्तरमुत्पन्न-पटादिज्ञाननिष्ठायां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाधेयता-निरूपिताधिकरणताव्यक्तौ क्लृप्तनियतपूर्ववृत्तेः सत्प्रतिपक्षविषयितायाः प्रकृत घटादिज्ञाननिष्ठां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति पूर्ववृत्तिताया अक्षततया ततोऽन्येषामुदासीनपदार्थान्तराणां घटज्ञानपूर्ववृत्तीनामप्रयोजक त्वमेव पाकजस्थले गन्धं प्रति नियतपूर्ववृत्तेरपि रूपप्रागभावस्य अकारणत्वमिव ।

इत्थञ्च सत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरमुत्पन्नघटादिज्ञाननिष्ठां ह्रद-धर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति सत्प्रतिपक्षविषयितायाः प्रयोजकत निष्प्रत्यूहैव । तदवच्छेदकं च जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयिता-साधारणं जलव्यापकवह्न्यभावविषयताकज्ञानविशिष्टजलवद्ध्रदविषयितात्वम् । न तु तद्व्यावृत्तं सत्प्रतिपक्षविषयितात्वं, तस्य तथात्वोपगमेऽपि सत्प्रतिपक्षविषयिता-शालिज्ञानान्तरव्यक्त्यव्यवहितोत्तरम् उत्पन्ने पटादिज्ञाने प्रकृतघटादिज्ञाननिष्ठाया ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावनिरूपितैतदधिकरणताव्यक्तेःसत्त्वप्रसङ्गस्य तुल्यत्वात् । तदतिप्रसङ्गवारणाय घटज्ञानसामग्र्याः सन्निकर्षादिघटितायाः पृथक् प्रयोजकतोपगमस्याऽवश्यकत्वात् ।

न च घटज्ञानसामग्र्याः घटज्ञानं प्रत्येव प्रयोजकत्वं, न तु तन्निष्ठाधि करणता प्रतीति वाच्यम् ।

घटज्ञानव्यक्तिसामग्र्याः घटज्ञानव्यक्तिं प्रतीव तन्मात्रनिष्ठाधिकरणतां प्रत्यपि नियतपूर्ववृत्तितया प्रयोजकत्वसम्भवात् ।

न चैवं सति निरुक्तसामग्र्या एव प्रयोजकताऽस्तु, न तु सत्प्रतिपक्षविषयितायाः अपि, गौरवात् प्रयोजनाभावाच्च इति वाच्यम् ।

तथासति, निरुक्तसामग्रीत्वावच्छिन्नप्रयोजकतामात्रनिरूपितायाः तदधिकरणताव्यक्तिनिष्ठप्रयोज्यतायाः अवच्छेदककोटौ ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाधेयतानिरूपितत्ववैशिष्ट्यनिवेशस्य प्रयोजनविरहेण; ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाधेयतानिरूपितत्ववैशिष्ट्यपर्वतधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाधेयतानिरूपित्ववैशिष्ट्यादिभिः अनन्तधर्मैः विनिगमनाविरहप्रसङ्गेन कबलिततया च अशक्यतया निरुक्तसामग्रीत्वावच्छिन्नप्रयोजकतानिरूपितायाः तदधिकरणताव्यक्तित्वमात्रावच्छिन्नायाः एव प्रयोज्यतायाः सिद्धेः। ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाधेयतानिरूपितत्वविशिष्टतदधिकरणतात्वावच्छिन्नप्रयोज्यतायाः जलव्यापकवह्न्यभावविषयिताविशिष्टजलवद्ध्रदविषयितात्वावच्छिन्नप्रयोजकतानिरुक्तसामग्रीत्वावच्छिन्नप्रयोजकतोभयनिरूपितत्वस्यावश्यकत्वात् । तदधिकरणताव्यक्तेः ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्वे जलव्यापकवह्न्यभावविषयिताविशिष्टजलवद्ध्रदविषयितायाः प्रयोजकतया, जलव्यापकवह्न्यभावविषयिताविशिष्टजलवद्ध्रदविषयितानिष्ठप्रयोजकतानिरूपितायाः तदधिकरणतानिष्ठप्रयोज्यतायाः अवच्छेदककोटौ ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्ववैशिष्ट्यस्य प्रवेशनीयत्वात् [1]। तदधिकरणतायां ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्वाद्यनन्तोदासीनधर्माणां वैशिष्ट्यस्य सत्त्वे तु जलव्यापकवह्न्यभावविषयिताविशिष्टजलवद्ध्रदविषयितायाः प्रयोजकत्वाभावेन तन्निष्ठप्रयोजकतानिरूपितायाः तदधिकरणतानिष्ठप्रयोज्यतायाः अवच्छेदककोटौ तेषामनन्तधर्माणां निवेशस्य अप्रसक्तेः ।

न चैवमपि निरुक्ताधिकरणतां प्रति सत्प्रतिपक्षविषयितायाः सत्प्रतिपक्षविषयितात्वेन प्रयोजकत्वमुत प्रतिहेतुव्यापकसाध्याभावविषयिताविशिष्टप्रतिहेतुमत्पक्षविषयिता–

---

1. **विशेषणप्रयोजकस्य विशिष्टप्रयोजकतानियमात्,**

त्वेनेत्यत्र विनिगमनाविरहादुक्तविषयितावशिष्टविषयितात्वेनैव प्रयोजकत्वं दुरुपपादमिति वाच्यम् ।

प्रकृतसत्प्रतिपक्षज्ञानोत्तरमुत्पन्नघटादिज्ञाननिष्ठपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतातो अन्यत्र प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयिताशालिज्ञानोत्तरमुत्पन्नपटादिज्ञाननिष्ठायां पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तौ प्रतिहेतुव्यापकसाध्याभावविषयिताविशिष्टप्रतिहेतुमत्पक्षविषयितात्वस्य क्लृप्तनियतपूर्ववृत्तितावच्छेदकताया एव प्रकृतां पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिं प्रति प्रयोजकतावच्छेदकत्वे विनिगमकत्वात् तस्य तथात्वे सामानाधिकरण्यविषयितायाः अप्रवेशेन लाघवस्यापि विनिगमकस सम्भवाच्च ।

न च तथापि उक्तघटज्ञानादिनिष्ठाधिकरणतां प्रति सत्प्रतिपक्ष विषयिताया घटज्ञानसामग्र्याश्चेति द्वयोः प्रयोजकतयोः कल्पनापेक्षया लाघवात् एतज्ज्ञानीयविषयितात्वेन एकैव प्रयोजकताऽस्तु । अनतिरिक्तवृत्तिधर्मस्यैवाऽवच्छेदकत्वनियमे प्रतिहेतुव्यापकसाध्याभावविषयिताविशिष्टप्रतिहेतुमत्पक्षविषयितात्वस्य पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावनिरूपितैतदधिकरणताव्यक्तिनिष्ठप्रयोज्यतानिरूपितप्रयोजकत्वाभाववत्यां कालान्तरीणज्ञानीयायां प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायां वृत्तितया तत्प्रयोजकताऽनतिरिक्तवृत्तित्वाभावेन तदवच्छेदकत्वाऽसम्भवाच्चेति वाच्यम् ।

एतद्विषयितात्वेन एकप्रयोजकतोपगमे, समानाकारकज्ञानेषु विषयिताभेदस्याप्रामाणिकतया सत्प्रतिपक्षविषयकसमानाकारकज्ञानान्तरोत्तरमुत्पन्न ज्ञा एतदधिकरणताप्रसंगस्य तादवस्थ्यात् ।

न च तर्हि एतज्ज्ञानीयत्वविशिष्टविषयितात्वेन प्रयोजकता अस्त्विति वाच्यम् ।

तथासति विषयितात्वप्रवेशने प्रयोजनविरहेण, पूर्ववृत्तितत्तज्ज्ञान व्यक्तित्वे प्रयोजकतायां पर्यवसानात्, तन्निरूपितायाः तदधिकरणतानिष्ठप्रयोज्यताया अवच्छेदककोटौ ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वा भावनिष्ठाधेयतानिरूपितत्ववैशिष्ट्यस्य निवेशे प्रयोजनाभावेन पूर्वोक्तरीत्या अनन्तैः उदासीनधर्मै विनिगमनाविरहप्रसङ्गेन च तन्निवेशस्य असम्भवेन, पूर्वतनतत्तज्ज्ञानव्यक्तित्वे प्रयोजकतायां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्व-

विशिष्टतदधिकरणताव्यक्तित्वावच्छिन्नप्रयोज्यतानिरूपितत्वस्य दुर्घटत्वात् । ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्वविशिष्टतदधिकरणताव्यक्तित्वावच्छिन्नं प्रति प्रयोजकान्तरस्यावश्यमभ्युपेयत्वात् ।

प्रतिहेतुव्यापकसाध्याभावविषयिताविशिष्टप्रतिहेतुमत्पक्षविषयितात्वस्य ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्वविशिष्टतदधिकरणतात्वावच्छिन्न-प्रयोज्यतानिरूपितप्रयोजकतायामवच्छेदकत्वे च न तदतिरिक्तवृत्तित्वं बाधकम् । कालान्तरीणज्ञानीयायाः प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायाः तदधिकरणताव्यक्तिं प्रत्यप्रयोजिकायाः निरुक्तरूपाक्रान्तत्वेऽपि प्रयोजकान्तरस्य निरुक्तसामग्रीविशेषस्य अभ्युपगततया तद्विरहेणैव निरुक्तकालान्तरीणज्ञानोत्तरम् तदधिकरणताव्यक्तेरप्रसङ्गात् ।

एतादृशातिप्रसङ्गवारणायैवावच्छेदकधर्मस्यावच्छेद्यानतिरिक्तवृत्तित्व-नियमोपगमात् । सत्प्रतिपक्षविषयितात्वस्यावच्छेदकत्वोपगमेऽप्यतिप्रसङ्गतादवस्थ्येन प्रयोजकतान्तरमभ्युपगम्यैव तस्य वारणीयतयोक्तनियमोल्लङ्घनस्य तुल्यत्वाच्च ।

इत्थं च सत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरमुत्पन्नघटज्ञाननिष्ठां ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिं प्रति सत्प्रतिपक्षविषयितायाः प्रतिहेतु-व्यापकसाध्याभावविषयिताविशिष्टप्रतिहेतुमत्पक्षविषयितात्वेनैव प्रयोजकतया, प्रतिहेतु-व्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायाः कालान्तरीणज्ञानीयायाः अपि तद्रूपाक्रान्ततया तदधिकरणताव्यक्तिं प्रति प्रयोजकतायाः अक्षततया अव्याप्त्यभिधानं सङ्गतमेव ।

नन्वेवमपि सत्प्रतिपक्षमात्रावगाहिज्ञानोत्तरमुत्पन्नज्ञाननिष्ठां पक्षधर्मिक-साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिं प्रति व्यवहितपूर्वज्ञानीयायाः प्रतिहेतु-व्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायाः प्रयोजकत्वोपगमे, पूर्ववृत्तिस्वनिष्ठ-प्रतिबन्धकतावच्छेदकधर्मस्यैव तदुत्तरोत्पन्नज्ञाननिष्ठप्रतिबद्ध्यतावच्छेदकधर्माभावा-धिकरणताप्रयोजकत्वम् इति गदाधरग्रन्थविरोध इति चेत् । न । दोषज्ञानोत्तरमुत्पन्न-ज्ञाननिष्ठां निरुक्ताभावाधिकरणतां प्रति दोषविषयितानां पूर्वतनतत्ज्ज्ञानवृत्तित्वविशिष्ट-दोषविषयितात्वेन[1] प्रयोजकत्वमित्याशयेन तदभिधानात् । तथा सत्यपि प्रकृतदोष-

---

1. निरूप्यनिरूपकभावापन्नविषयताकदोषविषयितात्वेन इत्यर्थः ।

ज्ञानोत्तरमुत्पन्नज्ञाननिष्ठायाः पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तेः समानाकारकप्रकृतदोषविषयकज्ञानान्तरव्यक्त्युत्तरमुत्पन्नज्ञाने प्रसंगस्य वारणसम्भवात् प्रयोज्यतावच्छेदककोटौ पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावनिष्ठाधेयतानिरूपितत्ववैशिष्ट्यस्य प्रवेशसम्भवाच्च ।

प्रकृतग्रन्थस्य तु, तत्तज्ज्ञानवृत्तित्वदोषविषयित्वयोः विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुभूतप्रयोज्यप्रयोजकभावद्वयकल्पनापेक्षया, पूर्वोक्तरीत्या तत्तत्सामग्रीत्वेन दोषविषयितात्वेन च लघुभूतप्रयोजकताद्वयकल्पनमुचितमित्यभिप्रायात्।

न च तथापि तत्तत्सामग्रीत्वेन प्रयोजकताकल्पनमपेक्ष्य तत्तज्ज्ञानव्यक्तित्वपर्यवसितेन रूपेण प्रयोजकताकल्पनमेव लघ्विति वाच्यम् ।

एवमपि पूर्वोक्तरीत्या दोषविषयितायाः ज्ञानान्तरीयविषयितासाधारण रूपेण स्वतन्त्रप्रयोजकतायां बाधकाभावेन लाघवेन च, तामादाय अव्याप्त्यभिधानस्य सङ्गते क्षतिविरहात् ।

एतेन, पूर्ववृत्तिज्ञानीयविषयिताऽतिरिक्तविषयितायाः प्रयोजकत्वस्वीकारे केवलव्यभिचारविषयकज्ञानाऽकालीनमेयत्वविशिष्टव्यभिचारविषयकज्ञानोत्तरज्ञानवृत्तिव्याप्त्यवगाहित्वाभावाधिकरणतायां केवलव्यभिचारज्ञानीयविषयिताया अप्रयोजकत्वाऽभिधायकेन कालीशङ्करीयग्रन्थेन विरोध इतिपरास्तम् । मेयत्वविशिष्टव्यभिचारविषयकज्ञानीयायाः व्यभिचारविषयितायाः तज्ज्ञानीयत्वविशिष्टव्यभिचारविषयितात्वेन प्रयोज कत्वमिति गदाधराऽभिप्रायानुसारित्वात् तद्ग्रन्थस्य । केवलव्यभिचारावगाहिज्ञानीयव्यभिचारविषयितायां तज्ज्ञानीयत्वविरहेण तद्विशिष्टव्यभिचारविषयितात्वस्य विरहेण अप्रयोजकतायाः युक्तत्वादिति दिक् ।

व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिः । प्रतिहेतुव्यापकसाध्याभावसमानकालीनप्रतिहेतुमत्पक्षस्य विशिष्टान्तरत्वसम्भवेनेति ।

इदमत्र बोध्यम् । उक्तयुक्त्या साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुसमानकालीनप्रतिहेतुमत्पक्षस्य विशिष्टान्तरत्वसम्भवेन साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुमत्पक्षेऽप्यव्याप्तिर्भवति । तद्विषयतयोः प्रयोजकतैक्यात् ।

नन्वेवं सति वह्न्यभावव्याप्यजलसमानकालीनजलवद्ध्रदस्य विशिष्टान्तरत्वसम्भवेन वह्न्यभावव्याप्यवद्ध्रदेऽपि लक्षणगमनाऽसम्भवात् असम्भवस्यैव सम्भवे अव्याप्त्यभिधानम् अनुचितम् इति चेत् ।

न । वह्न्यभावव्याप्यवद्ध्रदविषयकनिश्चयस्य तदभावव्याप्यवत्ता निश्चयत्वेन प्रतिबन्धकतावत्तया; वह्न्यभावव्याप्यजलकालीनजलवद्ध्रदनिश्चयस्य तु निश्चयविशिष्ट-निश्चयत्वेन प्रतिबन्धकतया तद्विषयितयोः प्रयोजकतैक्यविरहात् ।

न च तथापि वह्न्यभावव्याप्यजलवद्ध्रदस्य विशिष्टान्तरत्वसम्भवेन उक्तदोष-तादवस्थ्यम् । वह्न्यभावव्याप्यवान् ह्रदः इतिनिश्चयस्य येन रूपेण[1] प्रतिबन्धकत्वं 'वह्न्यभावव्याप्यजलवान् ह्रदः इति निश्चयस्य तद्रूपाक्रान्ततया तद्विषयितयोः प्रयोजकतैक्यादिति वाच्यम् । वह्न्यभावव्याप्यजलवद्ध्रदविषयितानिष्ठ-प्रयोजकतायाः प्रयोजकताविशिष्टान्यत्वाऽभावेन लक्षणघटकत्वाभावात् ।

यतो हि वह्न्यभावव्याप्यजलविषयताकनिश्चयविशिष्टजलवद्ध्रदविषयिता-त्वावच्छिन्नत्वेन रूपेण तत्र प्रयोजकतायां वह्न्यभावव्याप्यवद्ध्रदविषयितात्वावच्छिन्न-प्रयोजकतायाः स्वानवच्छेदकावच्छिन्नत्वसम्बन्धः स्वप्रयोज्यत्वाभावसमानाधिकरण-प्रयोज्यतानिरूपितत्वसम्बन्धो वाऽक्षत एव । स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगिता-नवच्छेदकत्वं तु वह्न्यभावव्याप्यजलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वेन रूपेण तत्रैव प्रयोजकतायां सुघटम् ।

न च 'वह्न्यभावव्याप्यवान् ह्रदः इति निश्चयोत्तरमुत्पन्नज्ञाननिष्ठां निरुक्ताभावा-धिकरणतां प्रति वह्न्यभावव्याप्यजलविषयकनिश्चयविशिष्टजलवद्ध्रदविषयितात्वा-वच्छिन्नस्य प्रयोजकत्वाभावात्, तदवच्छिन्नप्रयोजकतायां वह्न्यभावव्याप्यवद्ध्रद-विषयितात्वावच्छिन्नप्रयोजकतायाः स्वप्रयोज्याधिकरणतेत्यादिसम्बन्धो दुर्घट इति वाच्यम्।

वह्न्यभावव्याप्यजलवद्ध्रदविषयकनिश्चयस्य निरुक्तोभयविधप्रतिबन्धकतावत्तया तदीयायाः वह्न्यभावव्याप्यजलवद्ध्रदविषयितायाः निरुक्तप्रयोजकताद्वय[2]वत्तया वह्न्यभावव्याप्यजलवद्ध्रदविषयितानिष्ठप्रयोजक ताकत्ववती न इति प्रमया वह्न्यभाव-व्याप्यजलवद्ध्रदविषयितानिष्ठप्रयोज कतात्वेन रूपेण वह्न्यभावव्याप्यजलविषयकनिश्चय-विशिष्टजलवद्ध्रदविषयितात्वावच्छिन्नप्रयोजकतायाः विषयीकरणात् एतत्प्रतीतिसाक्षिक-भेदस्य वह्न्यभावव्याप्यवान् ह्रदः इतिनिश्चयोत्तरमुत्पन्नज्ञाननिष्ठायां निरुक्ताभावा-धिकरण तायां विरहात् ।

---

1. व्याप्यत्वावच्छिन्नप्रकारताकह्रदत्वावच्छिन्नविशेष्यताघटितरूपेणेत्यर्थः ।
2. ज्ञानवैशिष्ट्यघटितधर्मावच्छिन्ना तदघटितधर्मावच्छिन्ना चेति ।

६२. तादृशत्वनिवेशेपि वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभाव-कालीनजलवध्रदस्य विशिष्टान्तरत्वमादायोक्ताव्याप्तेरावश्यकतया

---

### विवेचनी

वह्न्यभावव्याप्यजलवद्ध्रदविषयितानिष्ठप्रयोजकतात्वावच्छिन्नस्य उक्तप्रयोजकता-विशिष्टत्वसम्भवात्, विशिष्यतत्तद्रूपावच्छिन्नत्वेन प्रयोजकतायाः अनिवेशात्, विशिष्टान्तर-विषयितानिष्ठत्वेनैव प्रयोजकतायाः निवेशितत्वात् ।

६२) वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलवद्ध्रदस्य विशिष्टान्तरत्वमादायोक्ताव्याप्तेरावश्यकतयेति ।

इदमुपलक्षणम्– वह्न्यभावव्याप्यव्याप्यवह्निव्यापकीभूताभावप्रतियोगिजलकालीन-जलवद्ध्रदस्य विशिष्टान्तरत्वमादाय वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदेऽपि अव्याप्तिर्बोध्या ।

प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयता-विशिष्टान्यत्वप्रतिहेतुव्यापकताविशिष्टसाध्याभावनिश्चयवैशिष्ट्यघटित-धर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभाववत्त्वमिति ।

अत्राऽभावप्रतियोगिकुक्षौ प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयता-विशिष्टान्यत्वस्याऽनिवेशे मेयत्वविशिष्टे जलव्यापकवह्न्यभावसमानाधिकरण-जलवद्ध्रदेऽतिव्याप्तिः । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयिताया जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितायाश्च लक्षणघटकत्वाभावे बाधादिविषयिताया एव लक्षणघटकत्वात् । तत्र प्रतिहेतुविषयतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वतादात्म्यान्यतरसम्बन्धेन । तत्र स्वनिरूपितत्वस्याऽप्रवेशे उक्तातिव्याप्ति-तादवस्थ्यम् । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितायाः जलव्यापक-वह्न्यभावकालीनजलवद्ध्रदविषयितायाश्च प्रतिहेतुविषयिताऽनात्मकतया निरुक्तोभय-वत्तया लक्षणघटकत्वाऽसम्भवात् । मेयत्वविशिष्टे ह्रदवृत्तिजलव्यापकवह्न्यभाव-समानाधिकरणजले तु अतिव्याप्तिर्वार्यते । तादात्म्याऽऽप्रवेशे तत्राऽतिव्याप्तिः । ह्रदवृत्ति-जलव्यापकवह्न्यभावसमानाधिकरणजलविषयितायाः ह्रदवृत्तिजलव्यापकवह्न्यभाव-कालीनजलविषयितायाश्च लक्षणघटकत्वाऽसम्भवात् ।

विशिष्टाऽन्तरे तादृशत्वमनिवेश्य विशिष्टान्तरविषयतायां प्रतिहेतुव्यापक-साध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वप्रतिहेतु-व्यापकताविशिष्टसाध्याभावविषयकनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्न-प्रयोजकतावत्त्वोभयाभाववत्त्वं निवेश्यैवोक्ताऽव्याप्तेर्वारणीयतयोक्ताति-व्याप्तिवारणसम्भवात् ॥

---

विवेचनी

प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्व-स्याऽनिवेशे मेयत्वविशिष्टे वह्न्यभावाभाववदवृत्तिमद्ध्रदे वह्निव्यापकीभूताभाव-प्रतियोगिजलवद्ध्रदे चातिव्याप्तिः । वह्न्यभावाभाववदवृत्तिमद्ध्रदविषयितायाः वह्नि-व्यापकीभूताभावप्रतियोगिजलवद्ध्रदविषयितायाश्च लक्षणघटकत्वाऽसम्भवेन प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षविषयितायाः एव लक्षणघटकत्वात् । दलद्वयनिवेशे तु निरुक्तसत्प्रतिपक्षत्रयविषयितानां लक्षणघटकत्वसम्भवेन नोक्तातिव्याप्तयः। मूलोक्तकालीनत्वघटितविशिष्टविषयितायास्तु निरुक्तदलद्वयवत्त्वेन लक्षणघटक-त्वाभावात् निरुक्ताव्याप्तिः निरस्यते ।

**अत्रानुगमे विशेषः** । आधेयतावच्छेदकद्वितीयसम्बन्धे स्ववैशिष्ट्यं प्रयोजकतायां स्वविशिष्टविषयितानिष्ठत्वस्वविशिष्टधर्मावच्छिन्नप्रयोजकता-विशिष्टान्यत्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट्यं स्वविशिष्टधर्माऽवच्छिन्न-निरूपकताकत्वस्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट्यं स्वावच्छिन्न-विषयिताशून्यप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । द्वितीये स्ववैशिष्ट्यं स्वसमानकालीनप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयिता-विशिष्टान्यत्वस्वसमानकालीनप्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्य-घटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयसम्बन्धेन ।

द्वितीये स्ववैशिष्ट्यं धर्मे स्वावच्छिन्नविषयितात्वव्यापकत्वसम्बन्धेन । उभयाभाववत्त्वं निवेश्येति ।

इदमुपलक्षणम्- साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुसमानकालीन-प्रतिहेतुमत्पक्षस्य विशिष्टान्तरतया साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुमत्प-

६३. नचैवमपि वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीन-जलोभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

६४. तत्र प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्ष-विषयतायां निरुक्तोभयाभावसत्त्वेन तत्प्रयोज्यत्वस्य निरुक्तविशिष्ट-विषयताप्रयोज्यधिकरणतायामक्षतत्वेनोक्तातिव्याप्त्यनवकाशात् ॥

६५. नच स्वपूर्ववृत्तिप्रतिबन्धकज्ञानीयप्रतिबन्धकतावच्छेदकविषयताय एव स्वनिष्ठप्रतिबध्यतावच्छेदकाभावप्रयोजकतया निरुक्तोभय वद्ध्रदविषयकनिश्चयाव्यावहितोत्तरानुमितिनिष्ठपक्षधर्मिकसाध्य-वैशिष्ट्यावगाहित्वाभावाधिकरणतायां व्यापकताघटितसत्प्रतिपक्षविषय-तायाः प्रयोजकत्वासम्भवेनोक्तातिव्याप्तिर्दुर्वारैवेति वाच्यम् ।

---

## विवेचनी

क्षेऽव्याप्तेर्वारणाय विशिष्टान्तरविषयितायां साध्यव्यापकीभूताभावप्रतियोगि-प्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रतिहेतुनिश्चय-वैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभाववत्त्वं निवेशनीयम् ॥

६३. वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलोभय-वद्ध्रदेऽतिव्याप्तिरिति ।

इदमुपलक्षणम्- वह्न्यभावव्याप्यव्याप्यवह्निव्यापकीभूताभावप्रति-योगिजलकालीनजलोभयवद्ध्रदेऽतिव्याप्तिः । वह्निव्यापकीभूताभावप्रतियोगिजल-कालीनजलवद्ध्रदविषयितयाः साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयता-विशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रतिहेतुनिश्चयवैशिष्ट्यघटित-धर्मावच्छिन्नप्रयोजकतावत्त्वोभयवत्त्वेन तदुभयाभाववद्विशिष्टान्तरविषयिताऽनात्मकतय लक्षणघटकत्वाऽसम्भवात् ।

६४) उक्तातिव्याप्त्यनवकाशादिति ।

वह्न्यभावव्याप्यव्याप्यवह्निव्यापकीभूताभावप्रतियोगिजलकालीन-जलोभयवद्ध्रदे तु वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदविषयिताम उभयाभाववद्विशिष्टान्तरविषयितात्वेन आदाय अतिव्याप्तिवारणं ज्ञेयम् ।

६६. प्रतिबन्धकतायाः प्रतिबन्धकतावच्छेदकताभेदेनेव प्रयोजकताया अपि प्रयोजकतावच्छेदकताभेदेन भेदः, तद्भेदश्च क्वचित्प्रयोजकता-वच्छेदकभेदात्, क्वचित्प्रयोजकतावच्छेदकतावच्छेदकभेदात्प्रकृते च निरूप्यनिरूपकभावापन्नविषयतात्वस्य प्रयोजकतावच्छेदक-स्यैक्यात्प्रयोजकताया ऐक्यमिति जलव्यापकेत्याद्युक्तोभय-वद्ध्रदेतिव्याप्तिविरहात् ॥

६७. नच जलव्यापको वह्न्यभाव इति निश्चयविशिष्टयोः ह्रदे जलं जलवान् ह्रद इति निश्चययोरनुगतरूपेण प्रतिबन्धकतामते ह्रदवृत्तिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताया-निरुक्तोभयाभाववद्विशिष्टान्तरविषयतात्वेन तदप्रयोज्यत्वस्य सत्प्रतिपक्षविषयताप्रयोज्याधिकरणतायामभावेन सत्प्रतिपक्षाव्याप्ति-वारणाय स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वप्रतिहेतुव्यापक-साध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वोभयाभाववत्त्व-स्यापि विशिष्टान्तरविषयतायामवश्यं निवेशनीयतया जलव्यापकेत्या-द्युभयवध्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

---

## विवेचनी

६७) स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वप्रतिहेतुव्यापकसाध्या-भावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वोभयाभाववत्त्वस्येति ।

अत्राभावप्रतियोगिकुक्षौ स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वस्याऽनिवेशे मेयत्वविशिष्टे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षेऽतिव्याप्तिः । प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षविषयितायाः लक्षणघटक-त्वाभावेन बाधादिविषयितामेवादाय लक्षणसङ्गमनसम्भवात् ।

प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वदल-परित्यागेऽसम्भवः । बाधाऽन्यविधसत्प्रतिपक्षविषयितानां प्रकृतदोषतावच्छेदकरूपा-वच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वाभावविरहेण लक्षणघटकत्वाभावेन तथाविधविशिष्टान्तरविषयित्वाऽप्रसिद्धेः । न च दोषैकदेशविषयितैव तादृशी प्रसिद्ध्यति,

स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वाभाववत्वस्य निरुक्तदोषैकदेश-विषयितासाधारण्यादिति वाच्यम् । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रद-त्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् ह्रदत्वादि तदवच्छिन्ननिरूपकताका निरुक्तोभयाभाव[1]वती या जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रदः इत्यादिप्रकृतसत्प्रतिपक्षज्ञानीयह्रदादि विषयिता, तन्निष्ठां प्रकृतसत्प्रतिपक्ष-विषयित्वीयप्रयोजकता विशिष्टा[2]न्यां तामेव प्रयोजकतामादायासम्भववारणाय विशिष्टान्तरे सत्यन्तमात्राश्रयत्वस्य निवेश्यतया दोषैकदेशविषयिताया लक्षणघटकत्वाऽसम्भवात् । तद्दलनिवेशे तु, बाधविषयितायाः साध्याभावव्याप्य-वत्पक्षविषयितायाश्च निरुक्तोभयाभाववत्वेन लक्षणघटकत्वसम्भवान्नाऽसम्भवः ।

प्रतिहेतुविषयतावैशिष्ट्यं निरूपितत्त्वतादात्म्यान्यतरसम्बन्धेन । तत्र निरूपित-तत्वस्याऽनिवेशे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षविषयिता-मादाय पक्षवृत्तिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतावव्याप्तिः तादात्म्याऽप्रवेशे पक्षवृत्तिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतु-विषयितामादाय प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षेऽव्याप्तिः ।

**अनुगमे विशेषः–** आधेयतावच्छेदकद्वितीयसम्बन्धे स्ववैशिष्ट्यं प्रयोजकताय स्वविशिष्टविषयितानिष्ठत्वस्वविशिष्टधर्मावच्छिन्नप्रयोजकताविशिष्टान्यत्वोभयसम्बन्धेन तत्र प्रथमे स्वविशिष्टविषयितानिष्ठत्वसम्बन्धे स्ववैशिष्ट्यं स्वविशिष्टधर्मावच्छिन्न-निरूपकताकत्वस्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिता-कभेदवत्त्वस्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व-एतत् त्रितयसम्बन्धेन ।

तत्र तृतीये स्ववैशिष्ट्यं स्ववृत्तिधर्मावच्छिन्नत्वस्वसमानकालीनप्रतिहेतुव्यापक-साध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वोभयसम्बन्धेन । तत्र प्रथमे वृत्तित्व

---

1. जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितान्तःपातिह्रदविषयितायाः प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्व विरहेण उभयाभाववत्वं, वह्न्यभावव्याप्यवद्ध्रदविषयितान्तःपाति ह्रदविषयिताया वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदविषयितायाश्च प्रतिहेतुव्यापकताप्रकारक निश्चय वैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्वविरहेण उभयाभाववत्वम् ।
2. स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वसम्बन्धविरहेण वैशिष्ट्यविरहः ।

६८. स्वविषयतायामपि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण-प्रतिहेतुविषयताविशिष्टान्यत्वेत्युभयाभावस्य निवेशात्, निरुक्तोभय-वद्ध्रदविषयतायां चोक्तोभयाभाववत्त्वविरहेणातिव्याप्तिविरहात् ॥

---

विवेचनी

स्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन ।

प्रथमद्वितीयसम्बन्धघटकवैशिष्ट्यं पूर्वम् (६२ कोटौ) उक्तमेव ।

इदमत्रावधेयम् । बाधविषयितामेव निरुक्तोभयाभाववद्विशिष्टान्तरविषयिता-त्वेनाऽऽदाय प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षादौ लक्षणं सङ्गमनीयम् । न चात्र साध्याभावव्याप्यवत्पक्षविषयितां साध्यव्यापकीभूताभाव-प्रतियोगिप्रतिहेतुमत्पक्षविषयितां वाऽदायापि लक्षणसङ्गमनम् आशङ्कनीयम् । यतो हि जलव्यापको वह्न्यभावः इति निश्चयविशिष्टयोः ह्रदो जलवान् ह्रदेजलम् इति निश्चययोः अनुगतरूपेण प्रतिबन्धकतामते वह्निव्यापकीभूताभावप्रतियोगिजलम् इति निश्चयविशिष्टयोः तयोः; ह्रदो वह्न्यभावव्याप्यवान् ह्रदे वह्न्यभाव-व्याप्यः इतिनिश्चययोश्चानुगतरूपेण प्रतिबन्धकतावत्त्वात्, ह्रदवृत्तिवह्निव्यापकीभूता-भावप्रतियोगिजलविषयितामादाय वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदे; ह्रदवृत्तिवह्न्यभावव्याप्यविषयितामादाय वह्न्यभावव्याप्यवद्ध्रदे चाऽव्याप्तेर्वारणा-योक्तोभयाभावप्रतियोगितावच्छेदककुक्षौ प्रति हेतुव्यापकसाध्याभावसमाना-धिकरणप्रतिहेतुविषयतासाध्यव्यापकीभूताऽभावप्रतियोगिप्रतिहेतुविषयतासाध्याभाव-व्याप्यविषयतासाधारणान्यतमत्वेन निवेशनीया, प्रत्येकं तत्तत्सत्प्रतिपक्षीयविषयतावैशिष्ट्यं घटकतानवच्छेदकधर्मावच्छिन्नत्वञ्चाऽन्तर्भाव्य द्वयम् उभयाभावान्तर[1]मेव वा निवेश्यम्। तथा च सत्प्रतिपक्षान्तरविषयितायाः उभयाभाववत्त्वाभावेन लक्षणघटकत्वं न सम्भवतीति।

जलव्यापकेत्याद्युभयवद्ध्रदेऽतिव्याप्तिः दुर्वारैवेति ।

इदमत्र बोध्यम् । वह्न्यभावव्याप्यव्याप्यवह्निव्यापकीभूताभावप्रतियोगिजलकालीन-जलोभयवद्ध्रदेऽपि अतिव्याप्तिर्दुर्वारा । वह्निव्यापकीविवेचनीभूताभावप्रतियोगिजल-

---

1. स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्यव्यापकीभूताभावप्रति योगिप्रतिहेतुविषयताविशिष्टत्वोभयाभावःस्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्या-भावव्याप्यविषयताविशिष्टत्वोभयाभावश्च ।

वद्ध्रदविषयितायाः उक्तोभयाभाववद्[1]विशिष्टान्तरविषयितात्वेन ग्रहणाऽसम्भवात् । वह्न्यभावव्याप्यव्याप्यवह्न्यभावव्याप्यजलकालीनजलोभयवद्ध्रदे तु नातिव्याप्तिः । वह्न्यभाव व्याप्यजलवद्ध्रदविषयितायाः निरुक्तोभयाभाववद्विशिष्टान्तरविषयितात्वेन[2] ग्रहणासम्भवेऽपि वह्न्यभावव्याप्यजलकालीनजलवद्ध्रदविषयितायाः ग्रहणसम्भवात् तद्वारकस्य साध्याभावव्याप्यविषयताविशिष्टान्यत्वसाध्याभावव्याप्यताप्रकारकप्रतिहेतुनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावस्य प्रयोजनविरहेण[3] पूर्वम् ( ६२ कोटौ) अनिवेशात् ।

**६८) स्वविषयतायामपि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वेत्युभयाभावस्य निवेशादिति ।**

अत्राभावप्रतियोगिकुक्षौ प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वनिवेशः प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय प्रतिहेतुव्यापकताविशिष्टसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वनिवेशस्तु साध्याभावाभाववदवृत्तिमत्पक्षात्मकस्य साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुमत्पक्षात्मकस्य च सत्प्रतिपक्षस्य सङ्ग्रहाय । प्रतिहेतुव्यापकसाध्याभावकालीनत्वघटितोक्तोभयवद् ध्रदविषयितायाम् एतदुभयस्यापि सत्वेन न तत्रोभयवद्ध्रदे अतिव्याप्तिः ।

**अनुगमे विशेषः–**

आधेयतावच्छेदकः प्रथमसम्बन्धः न पूर्वोक्तः (५२ कोटावुक्तः) स्वावच्छिन्नविषयिताप्रयुक्तत्वम्, अपि तु स्वविशिष्टविषयिताप्रयुक्तत्वम् । तत्र स्ववैशिष्ट्यं विषयिताया स्वावच्छिन्ननिरूपकताकत्वस्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । तत्र द्वितीये स्वविशिष्टत्वं स्वसमानकालीनप्रतिहेतु-

---

1. स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टत्वोभयाभावः ।

2. स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्याभावव्याप्यविषयताविशिष्टत्वोभयाभावः ।

3. वह्न्यभावव्याप्यजलकालीनजलवद्ध्रदविषयितायाः विशिष्टान्तरविषयितात्वेन ग्रहणसम्भवेऽपि वह्न्यभावव्याप्यवद्ध्रदे यथा अव्याप्तिविरहः तथोपपादितमधस्तात्

६९. नचैवं सत्यभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यके तादृशसाध्याभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षेपूर्वोक्त-

---

### विवेचनी

व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वस्वसमानकालीनप्रतिहेतुव्यापकताप्रकारकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयसम्बन्धेन ।

इदमत्र बोध्यम् । वह्न्यभावव्याप्यव्याप्यवह्निव्यापकीभूताभावप्रतियोगिजलकालीनजलोभयवद्ध्रदेऽतिव्याप्तेर्वारणाय स्वविषयतायां साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावो निवेशनीयः। तत्र प्रतियोगिकोटौ प्रथमदलनिवेशः साध्यव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय । द्वितीयदलनिवेशस्तु साध्याभावाभाववदवृत्तित्वघटितस्य प्रतिहेतुव्यापकताघटितस्य च सत्प्रतिपक्षस्य सङ्ग्रहाय ।

इत्थञ्च स्वविषयितायाम् उभयाभावद्वयं;[1] विशिष्टान्तरविषयितायां तु पुनः तदुभयाभावद्वयं,[2] पूर्वकोटौ प्रदर्शितम् उभयाभावत्रयं[3] च निवेशनीयम् इति पर्यवसितम् ।

६९. निरुक्तोभयाभाववत्त्वस्य स्वविषयतायां निवेशयितुमशक्यत्वेनेति।

---

1. प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वप्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावः साध्यव्यापकीभूताभावप्रतियोगि प्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगिताप्रकारकप्रतिहेतुनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावश्चेति निरुक्तोभयवध्रदयोर्वारणाय ।

2. प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षसाध्यव्यापकताघटितसत्प्रतिपक्षयोः सङ्ग्रहाय।

3. स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टत्वोभयाभावः, स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टत्वोभयाभावः, स्वावच्छिन्नघटकतानवच्छेदकधर्मावच्छिन्नत्वसाध्याभावव्याप्यविषयताविशिष्टत्वोभयाभावश्चेति त्रिविधसत्प्रतिपक्षसङ्ग्रहाय ।

रीत्या व्याप्तिरिति निरुक्तोभयाभाववत्त्वस्य स्वविषयतायां निवेशयितुमशक्यत्वेन उक्तातिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

७०. साध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वघटिततत्रितयाभाववत्त्वस्य स्वविषयतायां निवेशादुक्तसत्प्रतिपक्षविषयतायां च तस्य सत्त्वेन लक्षणगमनसम्भवात्; निरुक्तोभयवद्ध्रदे च नातिव्याप्तिः, तद्विषयतायां निरुक्तत्रितयाभाववत्त्वाभावात् ॥

---

## विवेचनी

स्वविषयितायां प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वप्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावस्य निवेशे अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यके साध्याभावाभाववदवृत्तिमत्पक्षरूपे सत्प्रतिपक्षेऽव्याप्तिः । तद्विषयितायां निरुक्तोभयाभावविरहादिति भावः ।

इदमुपलक्षणम् । साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगिताप्रकारकप्रतिहेतुनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वोभयाभावस्य निवेशे, घटः सामान्यत्वव्यापकीभूताभावप्रतियोग्यभावविशिष्टकालीनसामान्यत्ववानित्यत्र तादृशसामान्यत्वाभावाभाववदवृत्तिमद्घटे सत्प्रतिपक्षे अव्याप्तिः । तद्विषयितायां निरुक्तोभयाभावविरहादिति ।

७०. त्रितयाभावस्य स्वविषयतायां निवेशादिति ।

तथा च स्वविषयितायां निविष्टोभयाभावद्वयेऽपि प्रतियोगिकुक्षावधिकतया साध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वस्य साध्याभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षाऽव्याप्तिवारणानुरोधेन प्रवेशनीयतया त्रितयाभावद्वयमेव स्वविषयितायां विशेषणं पर्यवसितम् ।

---

1. प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वप्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वत्रितयाभावः, साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगित्वप्रकारकप्रतिहेतुनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वत्रितयाभावश्चेति ।

७१. नचैवं सत्युक्ताभावप्रतियोगिकोटौ प्रतिहेतुव्यापकताविशिष्ट-साध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्वस्य निवेशे प्रयोजनाभावात्, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतु-विषयताविशिष्टान्यत्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्य-त्वोभयाभाववत्त्वावच्छिन्नविषयतेत्याद्युक्तविशेषणेनैवोन्नायकवारणे सत्यन्तवैयर्थ्यापत्त्या, उक्तपरिष्कारासम्भवेन सम्पूर्णसत्प्रतिपक्षा-क्रांतत्वरूपतादृशत्वस्यैव विशिष्टान्तरे निवेशनीयतयोक्तोभय वद्ध्वदेऽति-व्याप्तिर्दुर्वारैवेति वाच्यम् ॥

---

## विवेचनी

तत्र प्रथमेऽभावप्रतियोगिकोटौ प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण-प्रतिहेतुविषयताविशिष्टान्यत्वनिवेशः प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय । प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतानिवेशः साध्यव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय । साध्याभावाभाववदवृत्तिविषयता-विशिष्टान्यत्वनिवेशः साध्याभावाभाववदवृत्तिमत्पक्षविशेषसङ्ग्रहाय[1]।

द्वितीये साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वनिवेशः साध्यव्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय । साध्यव्यापकीभूताभावप्रतियोगिप्रति-हेतुविषयकनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वनिवेशः प्रतिहेतुव्यापकता-घटितसत्प्रतिपक्षसङ्ग्रहाय । साध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वनिवेशस्तु साध्याभावाभाववदवृत्तिमत्पक्षविशेषसङ्ग्रहाय[2]।

७१) प्रतिहेतुव्यापकताविशिष्टसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्न-प्रयोजकतावत्त्वस्य निवेशे प्रयोजनाभावात्.. सत्यन्तवैयर्थ्यापत्त्येति ।

ननु साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुमत्पक्षात्मकस्य सत्प्रति पक्षस्य सङ्ग्राहकतया प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मा-वच्छिन्नप्रयोजकतावत्त्वदलस्य सार्थक्यं सम्भवति । तद्दलाऽनिवेशे उक्तसत्प्रतिपक्ष-

---

1. अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यके ।
2. सामान्यत्वव्यापकीभूताभावप्रतियोग्याभावविशिष्टकालीनसामान्यत्व साध्यके ।

विषयतायाः प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण– प्रतिहेतुविषयताविशिष्टान्यत्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वोभयवत्तया

तदुभयाभावशून्यतया लक्षणघटकत्वाऽसम्भवेनाऽव्याप्तिप्रसङ्गात् । तथा च उक्तत्रितयाभावपर्यन्तनिवेशस्य आवश्यकतया, सत्प्रति पक्षोन्नायकविषयितायां प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वविरहेण त्रितयाभावस्य अक्षततया, सत्यन्ताऽनुपादाने उक्तोन्नायकेऽतिव्याप्तिप्रसक्त्या तद्वारकतया सत्यन्तदलसार्थक्यं घटत एवेति चेत् ।

मैवम् । साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुमत्पक्षस्य सङ्ग्रहाय प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वोभयाभावप्रतियोगिकोटौ प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वस्य निवेशं; प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सङ्ग्रहाय साध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वसाध्याभावाभाववदवृत्तिविषयताविशिष्टान्यत्वोभयाभावप्रतियोगिकोटौसाध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयकनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वस्य च निवेशमपेक्ष्यलाघवात् प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वसाध्यव्यापकीभूताभावप्रतियोगिप्रतिहेतुविषयताविशिष्टान्यत्वसाध्याभावाभावदवृत्तिविषयताविशिष्टान्यत्वैतत्त्रितयाभावएकएवनिवेशयितुमुचितः । तावतैव, जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे वह्निव्यापकीभूताभावप्रतियोगिजलकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे चाऽतिव्याप्तेः वारणात् ।

इत्थञ्च सत्प्रतिपक्षोन्नायकविषयितायाम् एतत्त्रितयस्यैव सत्त्वेन तदभावविरहात् तस्याः स्वविषयितात्वेन ग्रहणाऽसम्भवात् अनेन विशिष्टान्तराऽघटितत्वदलेनैव तत्रातिव्याप्तेः वारणेन, सत्यन्तदलस्य उन्नाय कातिव्याप्तिवारकतया सार्थक्याऽसम्भवेन वैयर्थ्याभिधानं युज्यत एव ।

यत्तु सत्प्रतिपक्षोन्नायकविषयितायां प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्त्वस्य सत्त्वेन निरुक्तत्रितयाभावस्य विरहात् सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिवारणेन सत्यन्तवैय्यर्थ्यमुपपन्नम् । वह्न्यभावव्याप्यव्याप्यव्यापको वह्न्यभावः इति निश्चयविशिष्टस्य वह्न्यभावव्याप्यव्याप्यवान् ह्रदः इत्याकारकस्य

७२. विशिष्टान्तरे तादृशत्वमनिवेश्य विशिष्टान्तरविषयितायां स्वावच्छिन्न-विषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेश्य कालीनत्वघटित-पदार्थस्य वारणीयतयोक्तभयवद्ध्रदेऽतिव्याप्त्यनवकाशात् ॥

---

## विवेचनी

सत्प्रतिपक्षोन्नायकनिश्चयस्य वह्निमत्ताबुद्धिविरोधितया तदीयविषयितायाः प्रतिबन्धकतावच्छेदकत्वेन प्रयोजकत्वाक्षतेरिति ।

तन्न । व्याप्यतासम्बन्धेन प्रतिहेतुव्यापकसाध्याभावविषयताप्रतिहेतुमत्पक्ष-विषयतोभयविशिष्टत्वस्यैव प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटितधर्मावच्छिन्न-प्रयोजकतावत्वमित्यनेन विवक्षणीयत्वात् । यथाश्रुतस्य प्रतिहेतुव्यापकसाध्याभाव-निश्चयवैशिष्ट्यघटितधर्मावच्छिन्नप्रयोजकतावत्वस्य विवक्षणाऽसम्भवात् । तथासति, साध्यव्यापकताघटितसत्प्रतिपक्षमात्राऽसङ्ग्रहप्रसङ्गात् । जलव्यापको वह्न्यभावः इति निश्चयविशिष्टस्य जलवान् ह्रद इति निश्चयस्येव वह्निव्यापकीभूताभावप्रतियोगिजलवान् ह्रद इति निश्चयस्यापि जलव्यापकवह्न्यभावविषयकनिश्चयविशिष्टजलवद्ध्रदविषयक-निश्चयत्वाक्रान्तस्य तदवच्छिन्नप्रतिबन्धकतावत्तायाः दुर्वारतया, वह्निव्यापकीभूताभाव-प्रतियोगिजलवद्ध्रदविषयितायां प्रतिहेतुव्यापकसाध्याभावनिश्चयवैशिष्ट्यघटित-धर्मावच्छिन्नप्रयोजकताया अक्षतत्वात् । निरुक्तविवक्षणे तु, वह्निव्यापकीभूताभाव-प्रतियोगिजलवद्ध्रदविषयितायाः प्रतिहेतुव्यापकसाध्याभावविषयिताव्याप्यत्वाभावेन निरुक्तोभयव्याप्यताभावात् लक्षणघटकत्वं सम्भवति । समूहालम्बनमादाय तद्दोषतादवस्थ्यवारणाय वैशिष्ट्यघटकतया सामानाधिकरण्यमुपेक्ष्य व्याप्यत्वप्रवेशः। प्रतिहेतुमत्पक्षविषयितायाः वैशिष्ट्यप्रतियोगितया अनिवेशे शैवालव्यापकवह्न्य-भावकालीनह्रदो वह्निमानित्यत्र वह्निव्यापकी भूताभावप्रतियोगिजलवत्तादृशह्रदेऽव्याप्तिः। तद्विषयितायां निरुक्तत्रितयाभावविरहात् । इत्थञ्च वह्न्यभावव्याप्यव्याप्य-वद्ध्रदविषयितायां प्रतिहेतुव्यापकसाध्याभावविषयिताव्याप्यताविरहेण तदुभयव्याप्य-ताविरहात् निरुक्तत्रितयाभाववत्त्वमक्षतमेवेति दिक् ।

७२. विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयकत्वाऽव्यापकविषयिता-शून्यज्ञानीयत्वं निवेश्येति ।

विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीयत्वस्य

७३. नच तादृशत्वाऽनिवेशे व्यापकताघटितसत्प्रातिपक्षमात्रे अव्याप्तिः,

---

## विवेचनी

निवेशे सति विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयितायां च पूर्वोक्तमुभयाभावविशेषणं प्रयोजनविरहान्न निवेशनीयम् । कालीनत्वघटितविशिष्टविषयितायाः विपरीतसत्प्रतिपक्ष-विषयितायश्च सत्प्रतिपक्षविषयिताऽव्यापकविषयिताशून्यज्ञानीयत्वाभावेन तामादाय सत्प्रतिपक्षाऽव्याप्तेरप्रसक्तेः । उभयवद्ध्रदविषयिताऽव्यापकविषयिताशून्यज्ञानीयत्वस्य कालीनत्वघटितविशिष्टविषयितायां सत्वेन तामादायैव उभयवद्ध्रदयोः पूर्वोपदर्शितयोः अतिव्याप्तेः वारणाच्च ।

इत्थञ्च स्वावच्छिन्नविषयकत्वाऽव्यापकविषयिताशून्यज्ञानीया या स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपावच्छिन्ननिरूपकताका विषयिता तन्निष्ठा या स्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोज कताविशिष्टान्या प्रयोजकता तन्निरूपितप्रयोज्यतावदन्यस्वावच्छिन्नविषयिताप्रयोज्यपक्षधर्मिकसाध्यवैशिष्ट्यावगाहि-त्वाभावाधिकरणताकत्वम् इति विशिष्टान्तराऽघटितत्वदलार्थः पर्यवसितः ।

**अनुगमे विशेषः** – आधेयतावच्छेदकः प्रथमसम्बन्धः स्वावच्छिन्नविषयिता-प्रयुक्तत्वम् । द्वितीयसम्बन्धः स्वविशिष्टप्रयोजकतानिरूपितप्रयोज्यतावत्त्व-सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वम् तत्र स्ववैशिष्ट्यं स्वविशिष्टविषयितानिष्ठत्वस्वविशिष्टप्रयोजकताविशिष्टत्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट्यं स्वविशिष्टधर्मावच्छिन्ननिरूपकताकत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं धर्मे स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं प्रतीतौ स्वावच्छिन्नविषयिताशून्यत्वस्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वोभयसम्बन्धेन।

द्वितीये स्ववैशिष्ट्यं प्रयोजकतायां स्वावच्छिन्नविषयितात्वव्यापकरूपा-वच्छिन्नत्वसम्बन्धेन । प्रयोजकतावैशिष्ट्यं मूलोक्तसम्बन्धद्वयेन ॥

**७३. तादृशत्वाऽनिवेशे व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिरिति ।** ननु सर्वत्र सत्प्रतिपक्षे एकदेशविषयितामादाय असम्भवस्यैव सम्भवे अव्याप्त्यभि-धानमसङ्गतम् । तथाहि– वहन्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीति-विषयतावच्छेदकं यत् ह्रदत्वं तदवच्छिन्ननिरूपकताका वहन्यभावव्याप्यवद्ध्रद-

तत्रोक्तविशेषणाक्रान्तजलवद्ध्रदविषयताप्रयोज्यत्वस्य सत्प्रतिपक्षविषयताप्रयोज्यपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्वात्; तथाच विशिष्टान्तरे तादृशत्वस्यावश्यं निवेशनीयतयोक्तोभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

---

विवेचनी

त्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीया या विषयिता 'ह्रदो वह्न्यभावव्याप्यवान्' इति प्रकृतसत्प्रतिपक्षनिश्चयीयह्रदविषयिता, तन्निष्ठा या स्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्या[1] प्रकृतसत्प्रतिपक्षविषयितात्वावच्छिन्नप्रयोजकता, तन्निरूपितप्रयोज्यतावदन्यत्वं न सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायां वर्तते ।

न च उक्तविशिष्टान्तरतावच्छेदकं यद्रूपं तत्पर्याप्तावच्छेदकताकनिरूपकताकविषयितायाः विवक्षणान्नोक्तदोषः, सत्प्रतिपक्षविषयितान्तःपाति ह्रदविषयितायाः ह्रदत्वपर्याप्तावच्छेदकताकनिरूपकताकत्वाभावात् । एवं सति मेयत्वविशिष्टसत्प्रतिपक्षविषयितान्तःपातिसत्प्रतिपक्षविषयितायाः लक्षणाऽघटकत्वेऽपि न क्षतिः, शुद्धसत्प्रतिपक्षावगाहिज्ञानीयसत्प्रतिपक्षविषयितामादायैवाऽतिव्याप्तेः वारणसम्भवात् । तदुभयस्य प्रयोजकता वच्छेदकैक्येन प्रयोजकतैक्यस्य पूर्वमुपदर्शितदिशा आवश्यकत्वादिति वाच्यम् ।

पर्याप्तिविवक्षणेऽपि वह्न्यभावव्याप्यादिविषयितामादाय असम्भवतादवस्थ्यात्॥ विशिष्टान्तरतावच्छेदकं यत् वह्न्यभावव्याप्यत्ववह्न्यभावत्वादि तत्पर्याप्तावच्छेदकताकनिरूपकताकत्वस्य, अव्यापकविषयिताशून्यज्ञानीयत्वस्य च सत्प्रतिपक्षविषयितान्तःपाति वह्न्यभावव्याप्यादिविषयितायां सत्वात् । तन्निष्ठायाः सत्प्रतिपक्षविषयितान्तःपाति वह्न्यभावव्याप्यादिविषयितात्वावच्छिन्नायाः विनिगमनाविरहसिद्धायाः प्रयोजकतायाः निरुक्तप्रयोजकताविशिष्टाऽ[2]न्यत्वेन लक्षणघटकत्वादिति चेत् –

---

1. स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वविरहेण विशिष्टान्यत्वं बोध्यम् ।

2. स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वविरहेण वैशिष्ट्यविरहो बोध्यः ।

उच्यते– लाघवात् स्वावच्छिन्नाऽविषयकत्वस्य स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यप्रतीतौ निवेश्यतया, स्वावच्छिन्नाऽविषयिणी स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्या च या प्रतीतिः स्वनिष्ठत्वस्वविषयतावच्छेदकरूपावच्छिन्ननिरूपकताकत्वोभयसम्बन्धेन तद्विशिष्टविषयितायाः एव विशिष्टान्तरविषयितापदेन विवक्षणीयतया, न सत्प्रतिपक्षविषयितान्तःपातिवह्न्यभावव्याप्यविषयितादेः लक्षणघटकत्व सम्भवः। वह्न्यभावव्याप्यवद्ध्रदविषयितान्तःपातिवह्न्यभावव्याप्यादिविषयितायाः वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिनिष्ठत्वाभावेन तादृशप्रतीतिविशिष्टत्वाभावात्।

वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयिणी अव्यापकविषयिताशून्या या ह्रदः इत्याकारिका प्रतीतिः तद्विषयतावच्छेदकह्रदत्वावच्छिन्ननिरूपकताकां सत्प्रतिपक्षविषयितान्तःपातिह्रदविषयितामादाय असम्भववारणाय स्वनिष्ठत्वप्रवेशः।

वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नाऽविषयिणी अव्यापकविषयिताशून्या या ह्रदो वह्न्यभावव्याप्यवान् इत्याकारिका वह्न्यभावव्याप्यत्वेन ह्रदत्वावगाहिनी प्रतीतिः, तदीयह्रदविषयितानिष्ठां सत्प्रतिपक्षप्रमीयह्रदविषयितासाधारणीं प्रयोजकतामादाय असम्भवस्य वारणाय स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्ननिरूपकताकत्वनिवेशः।

नचैवमपि तथाविधविषयितानिष्ठप्रयोजकताऽप्रसिद्ध्या असम्भवो दुर्वार इति वाच्यम्। वह्न्यभावव्याप्यवान् इत्याकारिका या तथाविधविशिष्टान्तरविषयिणी प्रतीतिः तदीयविषयितानिष्ठायाः वह्न्यभावव्याप्यधर्मिकावृत्तित्ववैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकतायाः प्रसिद्धेः।

नचैवम् उक्तयुक्त्या जलवद्ध्रदविषयितायाः सत्प्रतिपक्षानवगाहिज्ञानीयाया एव लक्षणघटकतया, तस्याश्च एकदेशविषयितायाः व्यापकताघटितसत्प्रतिपक्षविषयित्वीयप्रयोजकतावच्छेदकरूपानाक्रान्तत्वेन सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायाम् अप्रयोजकतया तत्रापि सत्प्रतिपक्षे लक्षणगमनात् नाव्याप्तिप्रसक्तिरिति वाच्यम्।

व्यापकताघटितसत्प्रतिपक्षविषयितायाः कालीनत्वघटितविशिष्टविषयितासाधारणरूपेण प्रयोजकतायाः व्यवस्थापिततया, तद्रूपस्य च 'जलव्यापको वह्न्यभाव इति निश्चयकालीन 'जलवान् ह्रदः इति निश्चयीयजलवद्ध्रदविषयिता साधारणतया,

७४. स्वविषयताशालिनिश्चयाव्यावहितोत्तरानुमितित्वव्यापकविरोधिविषयताप्रयुक्तपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वरूपसत्प्रतिक्षत्वैकदेशस्यैव विशिष्टान्तरे निवेशनीयतया उक्तातिव्याप्त्यव्याप्त्योरनवकाशात् ॥

७५. नच तथानिवेशे ह्रदो वह्निजलाभावोभयवानित्यादौ जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपे सत्प्रतिपक्षेऽव्याप्तिः, जलवद्ध्रदरूपविशिष्टान्तरस्य निरुक्तविशेषणाक्रान्तत्वात्, अतः शेषदळस्यापि निवेशनीयतयोक्तोभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्॥

---

## विवेचनी

समानाकारकज्ञानेषु विषयिताभेदविरहेण च निश्चयान्तराऽसमानकालीन 'ह्रदो जलवान् इति निश्चयीयायाः जलवद्ध्रदविषयितायाः सत्प्रतिपक्षविषयित्वीयप्रयोजकतावच्छेदकरूपाक्रान्ततायाः अनिवार्यत्वात् ।

इत्थं च वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदेऽपि जलवद्ध्रदरूपविशिष्टान्तरविषयितामादाय अव्याप्तिः प्रसज्यते, न तु वह्न्यभावव्याप्यवद्ध्रदे ।

७४) सत्प्रतिपक्षत्वैकदेशस्यैव विशिष्टान्तरे निवेशनीयतयेति ।

अनुगमे विशेषः-

धर्मे स्ववैशिष्ट्यं स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वस्वसमानकालीनप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वाभावविशिष्टत्वोभयसम्बन्धेन। तत्र प्रथमे स्ववैशिष्ट्यं प्रतीतौ ७२तमकोटावुक्तमेव । द्वितीये अभाववैशिष्ट्यं ५४ तमकोटावुक्तमेव ।

७५. तथानिवेशे ह्रदो वह्निजलाभावोभयवान् इत्यादौ जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपे सत्प्रतिपक्षेऽव्याप्तिरिति ।

तथानिवेशे = स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यस्वावच्छिन्नाऽविषयकप्रतीतिविशिष्टविषयतावच्छेदकीभूतयद्रूपावच्छिन्ननिरूपकताकविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः विरोधिविषयताप्रयुक्तः तद्रूपावच्छिन्नविषयितानिष्ठस्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्य-

प्रयोजकतानिरूपितप्रयोज्यतावदन्यस्वविषयिताप्रयोज्यपक्षधर्मिकसाध्य-वैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वमिति निवेशे ।

नन्वेवं सति असम्भव एव । तथाविधविशिष्टान्तरविषयित्वाऽप्रसिद्ध्धेः । पूर्वोपदर्शितायाः दोषानवगाहिज्ञानीयायाः दोषैकदेशविषयितायाः पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताऽप्रयोजकतया लक्षणघटकत्वाऽसम्भवात् । तथाहि, दोषानवगाहि अव्यापकविषयिताशून्यं यत् 'वह्न्यभावव्याप्यः इत्याद्याकारकं ज्ञानं तद्विषयता वच्छेदकं यत् वह्न्यभावव्याप्यत्वादितदवच्छिन्ननिरूपकताकविषयिताशालिनिश्चयोत्तरम् उत्पन्नायां 'ह्रदो वह्निमान् इत्यनुमितौ प्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावविरहेण, प्रकृत-पक्ष साध्यवैशिष्ट्यावगाहित्वाभावे वह्न्यभावव्याप्यत्वादिरूपदोषैकदेशतावच्छेदक-धर्मावच्छिन्ननिरूपकताकविषयिताशालिनिश्चयाव्यवहितोत्तराऽनुमितित्व-व्यापकताविरहात् तादृशदोषैकदेशविषयितायाः लक्षणघटकत्वं न सम्भवति । बाधविपरीतसत्प्रतिपक्षविषयितानाम् अव्यापकविषयिताशून्यज्ञानीयत्वाभावेन; दोषज्ञानीयानां दोषैकदेशविषयितानां तु दोषतावच्छेदकरूपावच्छिन्न विषयिता-शून्यज्ञानीयत्वाभावेन उक्तविशेषणानाक्रान्ततया लक्षणघटकत्वं न सम्भवतीति चेत्

न । प्रतियोगिनि स्वत्वमन्तर्भाव्यलक्षणगमनसम्भवात् । स्वावच्छिन्ना-ऽविषयकस्वावच्छिन्नविषयताऽव्यापकविषयिताशून्यप्रतीतिविशिष्टविषयता-वच्छेदकीभूतयद्रूपावच्छिन्ननिरूपकताकविषयिताशालिनिश्चयाव्यवहितोत्तरा-नुमितित्वव्यापकः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः विरोधिविषयता प्रयुक्तः तद्रूपावच्छिन्नविषयितानिष्ठस्वावच्छिन्नविषयितात्वव्यापकरूपा वच्छिन्नप्रयोजकता-विशिष्टान्यप्रयोजकतानिरूपितप्रयोज्यतावत्स्वावच्छिन्नविषयिताप्रयोज्यपक्ष-धर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकान्यत्वेन विशेष्यदलघटकयद्रूप विशेषणीयम् ।

वह्न्यभावव्याप्यवद्ध्रदत्वादिकं नैतादृशं स्वम् । तदवच्छिन्नस्य तथाविधविशिष्टान्तरविषयित्वाऽप्रसिद्धेः । अपि तु, मेयत्वविशिष्टवह्न्यभावव्याप्य-वद्ध्रदत्वादि । शुद्धसत्प्रतिपक्षावगाहिज्ञानीयायाः वह्न्यभावव्याप्यवद्ध्रदादिविषयिताया एव तादृशविशिष्टान्तरविषयितायाः प्रसिद्धेः । तदन्यत्वस्य वह्न्यभावव्याप्यवध्रदत्वे सत्वात् नाऽसम्भवः । नापि निरुक्तोभयवद्ध्रदातिव्याप्तिः । तदीयतथाविधविशिष्टान्तर-विषयितायाः वह्न्य भावविषयिताजलव्यापकवह्न्यभावकालीनजलवद्ध्रद-

७६. स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किंचिद्रूपावच्छिन्न-स्वावच्छिन्नविषयकत्वाव्यापकविषयताशून्यज्ञानीयविषयतात्वावच्छिन्न-व्यापक तावच्छेदकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविषयताप्रयोज्योक्ताधिकरणतायां निवेशेनोक्ताव्याप्त्यति-व्याप्त्योर्वारणात्, तथाहि- सत्प्रतिपक्षविषयताप्रयोज्यपक्षधर्मिक-साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकतावच्छेदकं प्रतिहेतुव्यापकसाध्याभावनिश्चयप्रतिहेतुमत्पक्षविषयत्वनिश्चय-त्वादिसमुदायत्वं, तच्च न जलवद्ध्रदत्वावच्छिन्नविषयतात्वावच्छिन्न-व्यापकतावच्छेदकं, जलव्यापकवह्न्यभावसमानकालीनजलवद्ध्रद-विषयता च न स्वावच्छिन्नविषयकत्वाव्यापकविषयताशून्यज्ञानीयेति नोक्तसत्प्रतिपक्षाव्याप्तिः । नवोक्तोभयवद्ध्रदेऽतिव्याप्तिः, तत्र वह्न्यभाव-वद्ध्रदविषयत्वनिश्चयत्वादिसमुदायत्वे वह्न्यभाववद्ध्रदत्वावच्छिन्न-विषयतात्वावच्छिन्नव्यापकतावच्छेदकत्वसत्वात् ॥

---

## विवेचनी

ग्रहणसम्भवात् । बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय प्रयोजकताविशिष्टान्य-त्वनिवेशस्तु आवश्यक एव । ह्रदो वह्निजलाभावोभयवानित्यत्र तु जलव्यापक-वह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नस्य तथाविधविशिष्टान्तरविषयितायाः जलवद्ध्रदविषयितात्मिकायाः प्रसिद्ध्या तस्य स्वपदेन ग्रहणसम्भवात् तद वच्छिन्ने ग्रन्थकृदुद्भाविताऽव्याप्तिः सूपपद्यते ।

७६. प्रयोजकतावच्छेदकं --- प्रतिहेतुव्यापकसाध्याभावनिश्चय-प्रतिहेतुमत्पक्षविषयत्वनिश्चयत्वादिसमुदायत्वमिति ।

ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावं प्रति जलवद्ध्रदविषयितायाः जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यनिश्चयत्वानाहार्यत्वादिसाधारणसमुदायत्वेनैव प्रयोजकता । जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यनिश्चयत्वादिशून्यजलवद्ध्रदविषयक-ज्ञानोत्तरं ह्रदधर्मिकवह्निवैशिष्ट्यावगाहिज्ञानोत्पादात् ।

इत्थञ्च विशेषणप्रयोजकतावच्छेदकस्य विशिष्टप्रयोजकतावच्छेदकत्वनियमात् निरूपितत्वसम्बन्धेन ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावविशिष्टाधिकरणतां प्रति

निरुक्तसमुदायत्वस्य प्रयोजकतावच्छेदकत्वसिद्धिः। तच्च समुदायत्वं जलवद्ध्रदविषयिता व्यापकतावच्छेदकं न भवति, जलवद्ध्रदविषयताके जलव्यापकवह्न्यभावनिश्चयाऽसमानकालीने निश्चये जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यविरहेण तादृशवैशिष्ट्यजलवद्ध्रदविषयितादिसाधारणसमुदायत्वावच्छिन्नस्य विरहात् । अपि तु, निरुक्तनिश्चयवैशिष्ट्यव्यावृत्तं जलवद्ध्रदविषयतानिश्चयत्वानाहार्यत्वसाधारण समुदायत्वमेव जलवद्ध्रदविषयिताव्यापकतावच्छेदकं प्रसिद्ध्यति । तदवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाः ह्रदधर्मिकजलाभाववैशिष्ट्या वगाहित्वाभावाधिकरणतायां प्रसिद्धायाः विरहस्य ह्रदधर्मिकवह्निवैशिष्ट्या वगाहित्वाभावाधिकरणतायाम् अक्षतत्वात् समन्वयः ।

इत्थञ्च प्रतियोगिनि स्वत्वमन्तर्भाव्यदर्शितपरिष्कारे विशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वस्य प्रयोजकत्वे विशेषणताया आवश्यकत्वे, विशिष्टान्तरे सत्प्रतिपक्षत्वैकदेशस्य प्रयोजन विरहेण अनिवेश्यत्वात् अनुयोगिनि स्वत्वमन्तर्भाव्यपरिष्कारोऽपि न दुष्यते । दोषानवगाहिज्ञानीयामेव दोषैकदेशविषयितामादाय वह्न्यभावाभाववदवृत्तिमद्ध्रदे लक्षणगमनसम्भवात् । वह्न्यभावाभाववदवृत्तिमद्विषयितात्मकदोषैकदेशविषयिताव्यापकतावच्छेदकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाः वह्न्यभावाभाववदवृत्तिधर्मिकाऽवृत्तित्ववैशिष्ट्यावगाहित्वाभावाधिकरणतायां प्रसिद्धेः, तच्छून्यत्वस्य प्रकृतसत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायामक्षतत्वात् ।

ननु लाघवात् तादृशविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नत्वमेव कुतो न निवेशितम् इति चेत् ।

न । तथासति निरुक्तोभयसाध्यके जलवद्ध्रदविषयितामादाय तद्घटितसत्प्रतिपक्षेऽव्याप्तेर्वारणाऽसम्भवात् । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितानिष्ठप्रयोजकतायाः अवच्छेदकरूपस्य जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यादिसाधारणसमुदायत्वस्य जलवद्ध्रदविषयितात्मकविशिष्टान्तरविषयितात्वव्यापकत्वाऽक्षतेः । समानाकारकज्ञानेषु विषयिता भेदस्य अप्रामाणिकतया जलवद्ध्रदविषयितात्ववत्यां जलव्यापकवह्न्यभावनिश्चयाऽसमानकालीननिश्चयीयायाम् अपि जलवद्ध्रदविषयितायां जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यजलवद्ध्रदविषयितासाधारणसमुदायत्वस्य सत्त्वात् ।

७७. नचैवं मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिः, केवलसत्प्रतिपक्षविषयतात्वावच्छिन्नव्यापकतावच्छेदकत्वस्य निश्चयत्वादिघटितसमुदायत्वेऽभावात्; तादृशविषयतात्वावच्छिन्नव्यापकतावच्छेदककेवलविषयतात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाप्रसिद्ध्या सत्प्रतिपक्षाव्याप्तिवारणाय स्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्ववत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशरूपाभाववत्त्वस्यैव निरुक्ताधिकरणतायां निवेशनीयत्वात्; तथाचोक्तरीत्या निवेशो न सम्भवतीति वाच्यम् ॥

---

## विवेचनी

न च तथापि जलवद्ध्रदविषयितात्मकविशिष्टान्तरविषयितात्ववत्यां नियताहार्यज्ञानीयजलवद्ध्रदविषयितायां निरुक्तसमुदायत्वस्य सत्प्रतिपक्षविषयित्वीयप्रयोजकतावच्छेदकस्य विरहेण नोक्ताऽव्याप्तिप्रसङ्गः । नियताहार्यीय विषयितायाः प्रतिबन्धकतावच्छेदकताविरहेण अप्रयोजकतया प्रयोजकतावच्छेदकसमुदायत्वशून्यत्वादिति वाच्यम् ।

वक्ष्यमाणरीत्या (७७ कोटौ) मेयत्वविशिष्टे सत्प्रतिपक्षेऽतिव्याप्तेर्वारणाय विशिष्टान्तरविषयितायामनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्तित्ववैशिष्ट्यस्य निवेशनीयत्वात् । तद्विशेषितजलवद्ध्रदविषयितात्वस्य नियताहार्यज्ञानीयविषयिताव्यावृत्तत्वात् ।

अथैवं 'विशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाऽप्रयोज्यत्वनिवेशेऽपि निरुक्तोभयसाध्यके सत्प्रतिपक्षाऽव्याप्तिः दुर्वारैव । जलवद्ध्रदविषयितात्वेन रूपेण जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितया प्रयोज्यां ह्रदधर्मिकजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति विशिष्टान्तरभूतजलवद्ध्रदविषयितायाः तद्व्यापकतावच्छेदकीभूतेन जलव्यापकवह्न्यभावनिश्चयवैशिष्ट्यव्यावृत्तेन जलवद्ध्रदविषयितानिश्चयत्वाऽनाहार्यत्वसाधारणसमुदायत्वेन प्रयोजकतायाः अक्षतत्वादिति चेत् ।

न । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयिताप्रयोज्यां जलवद्ध्रदविषयित्वीयनिरुक्तसमुदायत्वावच्छिन्नाऽप्रयोज्यां ह्रदधर्मिकवह्निवैशिष्ट्या-

७८. अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टविशिष्टान्तर विषयतात्वावच्छिन्नव्यापकतावच्छेदकत्वस्यैव निवेशात्। निरुक्त समुदायत्वे च निरुक्तरूपावच्छिन्नव्यापकतावच्छेदकत्वस्याव्याहतत्वादतिव्याप्तिविरहात् ॥

---

विवेचनी

वगाहित्वाभावाधिकरणतामादायैव निरुक्तसत्प्रतिपक्षे लक्षणसमन्वयात् ।

अनुगमे विशेषः- आधेयतावच्छेदकद्वितीयसम्बन्धे स्ववैशिष्ट्यं प्रयोजकतायां स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टप्रयोजकताविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट्यं रूपे स्वविशिष्टधर्मविशिष्टत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं धर्मे स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । स्ववैशिष्ट्यं प्रतीतौ स्वावच्छिन्नविषयिताशून्यत्वस्वावच्छिन्नविषयिता ऽव्यापकविषयिताशून्यत्वोभयसम्बन्धेन । धर्मवैशिष्ट्यं स्वावच्छिन्नविषयितात्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । द्वितीये स्ववैशिष्ट्यं ७२ कोटावुक्तमेव ।

७८. अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्तित्वविशिष्टविशिष्टान्तरविषयतात्वावच्छिन्नव्यापकतावच्छेदकत्वस्यैव निवेशादिति ।

तथा च स्वावच्छिन्नविषयितानिष्ठयद्धर्मावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावतीस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपावच्छिन्नस्वावच्छिन्नविषयकत्वाऽव्यापकविषयताशून्याऽनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीयविषयतात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नस्वावच्छिन्नविषयितानिष्ठतद्धर्मावच्छिन्नप्रयोजकताविशिष्टान्यप्रयोजकतानिरूपितप्रयोज्यतावदन्या या पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावधिकरणतातादृशाधिकरणताकत्वम् इति विशिष्टान्तराऽघटितत्वदलार्थः पर्यवसितः ।

अनुगमे विशेषस्तु - धर्मवैशिष्ट्यं स्वावच्छिन्नविषयिताशाल्यनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय प्रयोजकताविशिष्टान्यत्वनिवेशनम् । समानाधिकरणजलवद्ध्रदात्मकबाधविषयित्वीयप्रयोजकतावच्छेदकसमुदायत्वस्य निरुक्तव्यापकतावच्छेदकत्वेन लक्षणघटकत्वात् ।

अथैवं स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्वस्वानवच्छेदकावच्छिन्नत्वोभयसम्बन्धेन बाधघटितसत्प्रतिपक्षविषयित्वीयप्रयोजकताविशिष्टायाः प्रयोजकतायाः बाधविषयित्वीयायाः प्रसिद्ध्या तत्र सत्प्रतिपक्षे लक्षणगमनसम्भवेऽपि, ह्रदो वह्निमान् इत्यादौ निरुक्तोभयसम्बन्धेन वह्न्यभाववद्ध्रदविषयित्वीयप्रयोजकताविशिष्टप्रयोजकतायाः अप्रसिद्ध्या अव्याप्तिः दुर्वारैव इति चेत् ।

न । वह्न्यभावव्याप्यवद्ध्रदविषयितान्तःपातिन्याः वह्न्यभावव्याप्यादिविषयितायाः विनिगमनाविरहसिद्धा या प्रयोजकता, तत्रैव निरुक्तोभयसम्बन्धेन वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतावैशिष्ट्यस्य प्रसिद्धेः। अवच्छेदकविशेषणस्य अवच्छेदकतावच्छेदकत्वमिति पक्षे ह्रदो वह्न्यभावव्याप्यवान् इति ज्ञानीयह्रदत्वावच्छिन्नविषयितायां व्याप्यत्वावच्छिन्नविषयित्वावच्छिन्नायाः अवच्छेदकताया इव विनिगमनाविरहेण व्याप्यत्वावच्छिन्नविषयितायां ह्रदत्वावच्छिन्नविशेष्यितावह्न्यभावत्वावच्छिन्नप्रकारितोभयावच्छिन्नायाः अतिरिक्तायाः अवच्छेदकतायाः आवश्यकतया, तुल्ययुक्त्या ह्रदत्वावच्छिन्नविषयित्वीयप्रयोजकतातो अतिरिक्तायाः प्रयोजकतायाः व्याप्यत्वावच्छिन्नविषयितायां सिद्धेः । तयोश्च प्रयोजकतयोः अवच्छेदकरूपस्य भिन्नतया अभिन्नाधिकरणता निरूपिततया च निरुक्तोभयसम्बन्धेन वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतावैशिष्ट्यस्य तदन्तःपातिवह्न्यभावव्याप्यविषयित्वीयप्रयोजकतायामक्षतत्वात् ।

न च तथापि स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वसम्बन्धघटितवैशिष्ट्यं तत्र न प्रसिद्ध्यतीति वाच्यम् । निरुक्तरीत्या परिष्कृतलक्षणे तस्य प्रयोजन[1]विरहेणाऽनिवेशात् ।

---

1. ह्रदो वह्निमान् इत्यत्र ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलविषयित्वीयप्रयोजकतायाः प्रयोजकताविशिष्टत्वेन लक्षणाऽघटकतया बाधादिविषयित्वीयप्रयोजकतायाः एव लक्षणघटकतया, तदनिरूपकत्वस्य मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलविषयिताप्रयोज्यायां पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामक्षतत्वात्, मेयत्वविशिष्टे

वस्तुतस्तु स्वनिरूपितप्रयोज्यतावदधिकरणतानिष्ठभेदप्रतियोगितावच्छेदकत्व-स्वानवच्छेदकानवच्छिन्नत्वान्यतरसम्बन्धेन स्वावच्छिन्ननिरूपकताकविषयित्वीय-प्रयोजकताविशिष्टत्वस्यैव निरुक्तविशिष्टान्तरविषयित्वव्यापकतावच्छेदकरूपावच्छिन्न-प्रयोजकतायां विवक्षितत्वान्न दोषः ।

वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नस्य निरुक्तविशिष्टान्तरविषयित्वव्यापकता-वच्छेदकं यत् वह्न्यभावव्याप्यवद्विषयित्वनिश्चयत्वादिसाधारणं वह्न्यभावव्याप्य-धर्मिकावृत्तित्ववैशिष्ट्यावगाहित्वाभावाधिकरणतानिरूपितप्रयोजकतावच्छेदक-समुदायत्वं तदवच्छिन्नप्रयोजकतायां निरुक्तान्यतरान्तर्गतेन स्वप्रयोज्याधिकरणतानिष्ठ-भेदप्रतियोगितावच्छेदकत्वसम्बन्धेन वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकता-वैशिष्ट्यस्य प्रसिद्धत्वात् तामादाय वह्न्यभावव्याप्यवद्ध्रदे समन्वयः ।

मेयत्वविशिष्टसत्प्रतिपक्षविषयित्वीयप्रयोजकतायास्तु निरुक्तान्यतरान्तर्गतेन स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन वैशिष्ट्यस्य सत्प्रतिपक्षविषयितात्मक-विशिष्टान्तरविषयित्वीयप्रयोजकतायां सत्वात् तामादाय मेयत्वविशिष्टसत्प्रति-पक्षेऽतिव्याप्तिः निरस्यते ।

बाधघटितसत्प्रतिपक्षविषयित्वीयप्रयोजकतायाः निरुक्तान्यतरसम्बन्धेन वैशिष्ट्यं तु बाधविषयित्वीयप्रयोजकतायां नास्ति । सत्प्रतिपक्षविषयित्वप्रयोज्यायां पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधविषयितायाः नियमेन प्रयोजकतया प्रथमसम्बन्धविरहात्; बाधसत्प्रतिपक्षविषयित्वयोः प्रयोजकतावच्छेदकरूपभेदेन द्वितीयसम्बन्धविरहात् । अतो न बाधविषयित्वीयप्रयोजकतामादायाऽव्याप्तिप्रसङ्गः।

---

तत्रातिव्याप्तिप्रसङ्गस्य वारणाय हि स्वप्रयोज्यत्वाभावेत्यादिसम्बन्धो निवेशितः । अधुना परिष्कृतलक्षणे तु विशिष्टान्तरविषयितायाम् अव्यापकविषयिता-शून्यत्वस्य निवेशिततया बाधादिविषयितायाः अतादृशत्वेन लक्षणघटक-त्वाऽसम्भवान्नतामादाय लक्षणगमनसम्भवः । किञ्च, अन्यत्वप्रतियोगिता-वच्छेदककोटौ स्वावच्छिन्न विषयित्वीयप्रयोजकतायाः विशिष्य तत्तद्धर्मावच्छिन्न-प्रयोजकतात्वेन निवेशिततया, तत्र मेयत्वविशिष्टह्रदवृत्तिवह्निव्यापकीभूताभाव-प्रतियोगिजलविषयितानिष्ठा यद्धर्मावच्छिन्नप्रयोजकता गृह्यते तद्धर्मावच्छिन्न-प्रयोजकता विशिष्टान्यत्वस्य तद्धर्मावच्छिन्नायामेव ह्रदवृत्तिव्यापकीभूताभाव-प्रतियोगिजलविषयितानिष्ठप्रयोजकतायां प्रसिद्ध्या तस्याः लक्षणघटकतया तदनिरूपकत्वस्य मेयत्वविशिष्टनिरुक्तसत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायां विरहेण तत्रातिव्याप्तिवारणं सम्भवति ।

एतेन,[1] अवच्छेदककोटिप्रविष्टानामवच्छेदकत्वमिति पक्षे वह्न्यभावव्याप्यवद्ध्रद- विषयितायां तदन्तःपातिवह्न्यभावव्याप्यादिविषयितायां च तावद्विषयितासाधारण- समुदायत्वावच्छिन्नायाः व्यासज्यवृत्तेरेकावच्छेदकताया अङ्गीकारात्, तुल्ययुक्त्या तथाविधाया एकप्रयोजकतायास्तत्र सत्त्वेन निरुक्तप्रयोजकताविशिष्टप्रयोजकता- ऽप्रसिद्धितादवस्थ्यम् । वह्न्यभावव्याप्यवद्ध्रदविषयितान्तःपातिवह्न्यभाव- व्याप्यादिविषयितानिष्ठप्रयोजकतायां वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतायाः वैशिष्ट्यस्य स्वानवच्छेदकावच्छिन्नत्वसम्बन्धविरहेण विरहादिति परास्तम् ।

तथा च पूर्वोपदर्शितपरिष्कारे निरुक्तोभयसम्बन्धेन तद्धर्मावच्छिन्नप्रयोजकता- विशिष्टान्यत्वं परित्यज्य, निरुक्तान्यतरसम्बन्धेन तद्धर्मावच्छिन्नप्रयोजकताविशिष्टत्वमेव निवेशनीयम् । तत्र[2] वैशिष्ट्यप्रतियोगिप्रयोजकतायाः स्वातन्त्र्येण[3] निवेशे बाधघटितसत्प्रतिपक्षेऽव्याप्तिः तदवस्थैव । बाधविषयित्वीयप्रयोजकतायां बाधविषयि- त्वीयप्रयोजकता वैशिष्ट्यस्य स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन विद्यमानतया तस्याः लक्षणघटकत्वात् । स्वावच्छिन्नविषयितानिष्ठत्वेन स्वावच्छिन्नविषयितात्वव्यापक- रूपावच्छिन्नत्वेन वा निवेशे तद्दोषतादवस्थ्यम् ।

बाधविषयित्वीयप्रयोजकतायाः बाधघटितसत्प्रतिपक्षविषयितानिष्ठत्वात्, बाधविषयित्वीयप्रयोजकतावच्छेदकसमुदायत्वस्य बाधघटितसत्प्रतिपक्षविषयितात्व- व्यापकत्वाच्च । स्वावच्छिन्नविषयिताव्यापकतावच्छेदकरूपावच्छिन्नत्वेन निवेशे पुनस्स एव दोषः । अतस्स्वावच्छिन्नविषयितायाः प्रकृतपक्षधर्मिकसाध्यवैशिष्ट्यावगाहि- त्वाभावाधिकरणतां प्रति येन रूपेण प्रयोजकत्वं तद्रूपावच्छिन्नत्वेनैव प्रयोजकता वैशिष्ट्यप्रतियोगितया निवेश्यते । तथा च प्रकृतपक्षधर्मिकसाध्यवैशिष्ट्यावगाहि- त्वाभावधिकरणतां प्रति सत्प्रतिपक्षविषयितायाः प्रतिहेतुव्यापकतानिश्चयवैशिष्ट्यादि- साधारणसमुदायत्वेनैव प्रयोजकतावत्तया तद्रूपावच्छिन्नप्रयोजकतायाः वैशिष्ट्य- प्रतियोगितया लक्षणघटकतया निरुक्तान्यतरसम्बन्धेन तद्विशिष्टत्वस्य बाधविषयित्वीय-

1. एतेन निरुक्तान्यतरसम्बन्धेन प्रयोजकतावैशिष्ट्यनिवेशे ग्रन्थकृतां तात्पर्योपवर्णनेन।
2. निरुक्तान्यतरसम्बन्धेन प्रयोजकतावैशिष्ट्यघटिते पूर्वमुपदर्शितपरिष्कारे तद्धर्माव च्छिन्नप्रयोजकतां विशिष्टप्रयोजकतेत्यत्र ।
3. शुद्धप्रयोजकतात्वेन ।

प्रयोजकतायामसत्वात् जलवद्ध्रदाद्यात्मकैकदेशविषयित्वीयप्रयोजकतायां निरुक्त-व्यापकतावच्छेदकरूपावच्छिन्नायां प्रसिद्धत्वात् तामादाय बाधघटितसत्प्रतिपक्षे लक्षणसमन्वयः ।

इत्थञ्च ह्रदो वह्निधूमोभयवान् इत्यत्र पूर्वोक्तमहासत्प्रतिपक्षघटके मेयत्वविशिष्टे अवान्तरसत्प्रतिपक्षेऽपि नातिव्याप्तिः । अवान्तरसत्प्रतिपक्षविषयित्वीयप्रयोजकतायां मेयत्वविशिष्टावान्तरसत्प्रतिपक्षविषयित्वीयप्रयोजकतायाः वैशिष्ट्यस्य स्वानवच्छेदका-नवच्छिन्नत्वसम्बन्धेन सत्तया तस्याः लक्षणघटकत्वसम्भवात् । मेयत्वविशिष्टावान्तर-सत्प्रतिपक्षविषयितायाः महासत्प्रतिपक्षविषयित्वीयप्रयोजकतावच्छेदकरूपेण प्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकत्वाभावेन महासत्प्रति-पक्षविषयित्वीयप्रयोजकतायाः वैशिष्ट्यप्रतियोगितया लक्षणघटकत्वाऽसम्भवात् ।

नापि मेयत्वविशिष्टे ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजले अतिव्याप्तिः। तद्विषयितायां प्रयोजकताद्वयसत्वेऽपि यद्धर्मावच्छिन्नप्रयोजकतेत्यनेन या प्रयोजकता गृह्यते, निरुक्तान्यतरान्तर्गतस्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन तत्प्रयोजकतायाः वैशिष्ट्यस्य तस्यामेव प्रयोजकतायां ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगि-जलविषयितात्मकविशिष्टान्तरविषयिताव्यापकतावच्छेदकरूपावच्छिन्नायां प्रसिद्ध्या तन्निरूपितप्रयोज्यतावदन्यत्वस्य तद्धर्मावच्छिन्नप्रयोजकतानिरूपिकायां पक्षधर्मिक-साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विरहात् । अतो न सम्बन्धान्तरस्य वैशिष्ट्यघटकतया प्रवेशनीयता ।

अथैवं बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय प्रयोजकताविशिष्टत्व निवेशस्य विवक्षितत्वे, अग्रिमकोटौ ह्रदो वह्निजलाभावोभयवान् इत्यत्र जलव्यापकवह्नि-जलाभावोभयाभावसमानाधिकरणजलवद्ध्रदे जलवद्ध्रदात्मकबाधघटिते सत्प्रतिपक्षे-ऽव्याप्त्यभिधानं न सङ्गच्छेत । निरुक्तान्यतर सम्बन्धेन तादृशसत्प्रतिपक्षविषयित्वीय-प्रयोजकतावैशिष्ट्यस्य निरुक्तबाध विषयित्वीयप्रयोजकतायां विरहेण बाधविषयित्वीय-प्रयोजकतायाः लक्षणघटकत्वाऽसम्भवात् । तयोः प्रयोजकतयोरवच्छेदकभेदेन द्वितीयसम्बन्ध बाधात् । तादृशसत्प्रतिपक्षविषयिताप्रयोज्यायां वह्निजलाभावोभय-वैशिष्ट्यावगाहित्वाभावाधिकरणतायां जलवद्ध्रदविषयितायाः व्यापकाभावप्रयोजकस्ये-त्यादिरीत्या प्रयोजकतायाः अक्षततया प्रथमसम्बन्धबाधात् । व्यापकाभावेत्यादिनि-यममङ्गीकृत्यैव तद्ग्रन्थस्य प्रवृत्तत्वात् ।

न च पूर्वोक्तं यथाश्रुतं प्रयोजकताविशिष्टान्यत्वविशेषणमभिप्रेत्य तद्ग्रन्थप्रवृत्तिरिति वाच्यम् ।

जलवद्ध्रदविषयित्वीयप्रयोजकतायां तद्घटितसत्प्रतिपक्षविषयित्वीयप्रयोजकतायाः स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्वस्वानवच्छेदकावच्छिन्नत्व-सम्बन्धाभ्यां वैशिष्ट्यस्य पूर्वोक्तयुक्त्या अक्षतेः, सत्प्रतिपक्षविषयित्वीयप्रयोजकता-कप्रयोज्यताशून्यां ह्रदधर्मिकजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति जलवद्ध्रदविषयितायाः प्रयोजकतावत्तया स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यता-निरूपितत्वसम्बन्धेनापि वैशिष्ट्यस्याऽक्षतेः, बाधविषयित्वीयप्रयोजकतायाः प्रयोजकता-विशिष्टान्यत्वाभावेन लक्षणघटकत्वाऽसम्भवात् ।

न च प्रयोजकताविशिष्टान्यत्वं प्रयोजकताविशिष्टत्वं वा विशेषणं न निवेशित-मित्यभिप्रायेण अव्याप्त्यभिधानमिति वाच्यम् ।

तथासति, बाधघटितसत्प्रतिपक्षे जलव्यापकसमानाधिकरणजलसमानाधिकरण-जलवद्ध्रदे अव्याप्तितादवस्थ्यात् ।

न चास्मिन् जलव्यापकसमानाधिकरणजलेत्यादिसत्प्रतिपक्षेऽव्याप्तिवारणाय प्रयोजकताविशिष्टान्यत्वादिविशेषणप्रक्षेपः न ग्रन्थकृत्सम्मतः, ग्रन्थकारैरस्मिन् सत्प्रतिपक्षेऽव्याप्तिप्रसङ्गस्य अत्र ग्रन्थे क्वाप्यनुद्भावितत्वादिति वाच्यम् ।

अस्य सत्प्रतिपक्षस्य विशिष्याऽप्रदर्शनेऽपि बाधघटितसत्प्रतिपक्षत्वेन प्रदर्श्य तत्राऽव्याप्तेरुद्भावितत्वात्[1] ।

न च अनुपदं वक्ष्यमाणः जलव्यापकनिरुक्तोभयाभावसमानाधिकरण-जलवद्ध्रदः जलवद्ध्रदात्मकबाधघटितः सत्प्रतिपक्ष एव बाधघटितसत्प्रतिपक्षत्वेन ग्रन्थकृत्सम्मत इति वाच्यम् ।

बाधघटितसत्प्रतिपक्षत्वेन ग्रन्थकृत्सम्मते विशिष्टे प्रयोजकताविशिष्टा-न्यत्वदलेनाव्याप्तिवारणस्यापि तत्सम्मतत्वात् । जलवद्ध्रदघटिते निरुक्तविशिष्टे तु प्रयोजकताविशिष्टान्यत्वदलेन अव्याप्तेरवारणात् । ५४तमकोटौ बाधघटितसत्प्रतिपक्षे-ऽव्याप्तिवारणाय प्रयोजकताविशिष्टान्यत्वं निवेश्य, व्यापकाभावप्रयोजकस्येत्यादिनि-यममनादृत्यैव बाधविषयित्वीयप्रयोजकतायां बाधघटितसत्प्रतिपक्षविषयित्वीय-प्रयोजकतायाः स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकत्वादिसम्बन्धेन

---

1. ३ कोटौ बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय - इत्यादिग्रन्थेन ।

वैशिष्ट्यमभिहितवतां ग्रन्थकृतां, यत्सत्प्रतिपक्षविषयिताप्रयोज्यां पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति तद्घटकबाधविषयितायाः व्यापकाभावप्रयोजकस्येत्यादिनियमनिरपेक्षं साक्षाद्प्रयोजकत्वमस्ति तस्यैव बाधघटितसत्प्रतिपक्षत्वेन सम्मतत्वात् । जलवद्ध्रदघटितनिरुक्तविशिष्टस्य अतथात्वेन बाधघटितसत्प्रतिपक्षतया प्रयोजकताविशिष्टान्यत्वादिदलवारणीयतया च ग्रन्थकृत्सम्मतत्वाभावात्। जलव्यापकसमानाधिकरणजलेत्यादिविशिष्टस्य तु तथात्वेन प्रयोजकता विशिष्टन्यत्वदलवारणीयतया ग्रन्थकृत्सम्मतत्वसम्भवात् ।

इत्थञ्च जलव्यापकसमानाधिकरणजलेत्यादिविशिष्टे सत्प्रतिपक्षे अव्याप्तिवारणाय निरुक्तोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वस्य निरुक्तान्यतरसम्बन्धेन प्रयोजकताविशिष्टत्वे पर्यवसितस्यावश्यं निवेश्यतया, अग्रिमकोटौ वक्ष्यमाणाऽव्याप्तेरसङ्गतिर्वज्रलेपायत एवेति चेत् ।

अत्रोच्यते–बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय विशिष्टान्तरविषयित्वीयप्रयोजकतायां निरुक्तान्यतरसम्बन्धेन स्वावच्छिन्नविषयित्वीयप्रयोजक तावैशिष्ट्यं निवेशनीयमेव । किन्तु तत्र वैशिष्ट्यघटकप्रथमसम्बन्धे साक्षात्प्रयोजकतानिरूपितप्रयोज्यत्वमेव भेदप्रतियोगितावच्छेदकताघटकसम्बन्धतया प्रवेशनीयम् । साक्षात्परस्परासाधारणस्य स्वनिरूपितप्रयोज्यतावत्त्वमात्रस्य निवेशे, ह्रदो अवृत्तिवह्न्यभावव्याप्यकालीनवह्निमानित्यत्र वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायाः असङ्ग्रहेण वह्न्यभावव्याप्य वद्ध्रदेऽव्याप्तिप्रसङ्गः । वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतानिरूपितप्रयोज्यतावत्यां ह्रदधर्मिकावृत्तिवह्न्यभावव्याप्यकालीनवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतायां वह्न्यभावव्याप्यवद्विषयितायाः व्यापकाभावप्रयोजकस्येत्यादिरीत्या प्रयोजकतावत्त्वात्, वह्न्यभावव्याप्य धर्मिकावृत्तित्ववैशिष्ट्यावगाहित्वस्य ह्रदधर्मिकावृत्तिवह्न्यभावव्याप्य कालीनवह्निवैशिष्ट्यावगाहित्वं प्रति व्यापकत्वात् । वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायाः लक्षणघटकत्वाऽसम्भवात् ।

न च वह्न्यभावव्याप्यवद्ध्रदविषयिताप्रयोज्यायां ह्रदधर्मिकवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहित्वाभावाधिकरणतायां वह्न्यभावव्याप्यवद्विषयितायाः प्रयोजकताविरहात् तत्र स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतावैशिष्ट्यं सम्भवति । वह्न्यभावव्याप्य-

वद्ध्रदविषयितायाः येन रूपेण ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकत्वं तेनैव रूपेण ह्रदधर्मिकवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकताया अक्षतत्वादिति वाच्यम् ।

वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र तादात्म्यसम्बन्धावच्छिन्नत्वाभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वाभाववद्विशिष्टवृत्तित्वविषयितात्मिकायाः बाधघटितसत्प्रतिपक्षविषयितायाः प्रकृतपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति येन रूपेण प्रयोजकत्वं तेनैव रूपेण प्रकृतपक्षधर्मिकसाध्याभावव्याप्याभाववैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति प्रयोजकतावत्तया तत्राधिकरणतायां बाधविषयित्वीयप्रयोजकतावच्छेदस्याक्षततया बाधविषयित्वीयप्रयोजकतायाः लक्षण घटकत्वेन बाधघटिते निरुक्तसत्प्रतिपक्षेऽव्याप्तेर्वारणाय प्रयोजकता वैशिष्ट्यघटकसम्बन्धे प्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधि करणतायाः विशिष्य निवेशनीयत्वात् ।

न च तन्निवेशेऽपि तत्र साध्यतावच्छेदकतापर्याप्तिमप्रवेश्यैव निरुक्तबाधघटितसत्प्रतिपक्षे अव्याप्तिवारणेन तत्र पर्याप्तेः अनिवेश्यतया, वह्न्यभावव्याप्यवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकवह्नित्वावच्छिन्न-वैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय तदप्रयोजकीभूतवह्न्यभावव्याप्यवद्विषयितानिष्ठप्रयोजकतयां वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकता वैशिष्ट्यं शक्योपपादनम् इति वाच्यम्।

ह्रदः समानाधिकरणवह्निमानित्यत्र समानाधिकरणवह्न्यभावव्यापकवह्न्यभावसमानाधिकरणसमानाधिकरणवह्न्यभावद्ध्रदे समानाधिकरणवह्न्यभाववद्ध्रदात्मकबाधघटिते वह्निसामान्याभावोन्नायके सत्प्रतिपक्षेऽव्याप्तिवारणाय साध्यतावच्छेदकतापर्याप्तिनिवेशस्याऽवश्यकत्वात् । तदनिवेशे, निरुक्तसत्प्रतिपक्षविषयिताप्रयोज्यायां ह्रदधर्मिकव्यधिकरणवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतायां समानाधिकरणवह्न्यभाववद्ध्रदविषयितायाः अप्रयोजकतया, तदीयप्रयोजकतायाः स्वप्रयोज्यपक्षसाध्य वैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन निरुक्तसत्प्रतिपक्षविषयित्वीयप्रयोजकताविशिष्टतया लक्षणघटकतायाः दुर्वारत्वात् ।

न च निरुक्तबाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणाय अधिकवारकपर्याप्तिरेव निवेश्यते, न तु न्यूनवारकपर्याप्तिः । तथा च अवृत्तिवह्न्यभावव्याप्यकालीनवह्निसाध्यके वह्न्यभाव-

व्याप्यवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायाः लक्षणघटकत्वसम्भवेन वह्न्यभावव्याप्यवद्ध्रदे समन्वयात् प्रयोजकतावैशिष्ट्यघटकसम्बन्धघटकतया साक्षात्प्रयोजकतानिवेशनमफलमिति वाच्यम् ।

न्यूनवारकपर्याप्तेरनिवेशे अनुपदोक्तबाधघटितसत्प्रतिपक्षविषयिताप्रयोज्यां ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय समानाधिकरणवह्न्यभाववद्ध्रदविषयित्वीयप्रयोजकतायाः लक्षणघटकत्वापत्त्या तद्दोषतादवस्थ्यात् ।

एवं, जलं पाकजगन्धवत् इत्यत्र पाकजगन्धाभावव्यापकगन्धाभावसमानाधिकरणपाकजगन्धाभाववज्जले पाकजगन्धाभाववज्जलात्मकबाधघटिते गन्धसामान्याभावोन्नायके सत्प्रतिपक्षेऽव्याप्तेश्च । पाकजगन्धाभावव्यापकगन्धाभावसमानाधिकरणपाकजगन्धाभाववज्जलात्मकसत्प्रतिपक्षविषयिता प्रयोज्यां जलधर्मिकगन्धवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति पाकजगन्धाभाववज्जलविषयितायाः अप्रयोजकतया तदीयप्रयोजकतायाः लक्षणघटकतायाः दुर्निवारत्वात् ।

न चैवमपि, मास्तु वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायाः लक्षणघटकत्वम्, तथापि वह्न्यभावभाववद्विषयित्वीयप्रयोजकतायाः विशिष्टान्तरविषयिताव्यापकतावच्छेदकरूपावच्छिन्नायाः वह्न्यभावाभावधर्मिकावृत्तित्ववैशिष्ट्यावगाहित्वाभावाधिकरणतानिरूपितायाः वह्न्यभावव्याप्यवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकावृत्तिवह्न्यभावव्याप्यकालीनवह्निवैशिष्ट्यावगाहित्वाभावधिकरणतां प्रति व्यापकाभावस्येत्यादिरीत्यापि प्रयोजकताविरहेण वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकताविशिष्टतया लक्षणघटकत्वात् तामादाय वह्न्यभावव्याप्यवद्ध्रदे लक्षणसङ्गमनसम्भवात् साक्षात्प्रयोजकत्वं न निवेश्यमेवेति वाच्यम् ।

निरुक्तस्थले वह्न्यभावाभाववद्विषयित्वीयप्रयोजकतामादाय सत्प्रति पक्षे लक्षणसमन्वयसम्भवेऽपि ह्रदोऽवृत्तिवह्न्यभावाभावकालीनाऽवृत्तिवह्न्यभावव्याप्यकालीनवह्निमानित्यत्र वह्न्यभावव्याप्यवद्ध्रदे अव्याप्तेः दुरुद्धरत्वात् । तत्र वह्न्यभावाभाववद्विषयित्वीय प्रयोजकतायाः अपि लक्षणघटकत्वाऽसम्भवात् ।

इत्थञ्च प्रयोजकतावैशिष्ट्यघटकप्रथमसम्बन्धे साक्षात् प्रयोजकतानिरूपितप्रयोज्यत्वस्यैव भेदप्रतियोगितावच्छेदकताघटकसम्बन्धतया निवेशस्य आवश्यकतया, ह्रदो वह्निजलाभावोभयवानित्यत्र जलव्यापकवह्निजलाभावो

७९. नच वह्निजलाभावोभयसाध्यके जलव्यापकतादृशोभयाभाव समानाधिकरणजलवद्ध्रदरूपे सत्प्रतिपक्षेऽव्याप्तिः, तत्प्रयोज्यायां-पक्षधर्मिकनिरुक्तोभयवैशिष्ट्यावगाहित्वाभावाधिकरणतायां निरुक्तसत्प्रतिपक्षविषयतानिश्चयत्वादिपर्याप्तसमुदायत्वस्यैव व्यापकाभाव-प्रयोजकस्येत्यादिरीत्या विशिष्टान्तरभूतजलवद्ध्रदविषयतानिश्चयत्वादि-पर्याप्तसमुदायत्वस्यापि प्रयोजकतावच्छेदकतया निरुक्तरूपावच्छिन्न-प्रयोजकतानिरूपितप्रयोज्यताशून्यस्वविषयताप्रयोज्योक्ताधिकरणताकत्वस्य तत्राभावात्; अतो विरोध्युन्नायकत्वघटिततादृशत्वमेव विशिष्टान्तरे निवेश्यमित्युक्तोभयवद् ध्रदादावतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

८०. तादृशत्वनिवेशेऽपि जलव्यापकवह्न्यभावसमानाधिकरणजल-व्यापकतादृशोभयाभावसमानाधिकरणतादृशजलवद्ध्रदरूपसत्प्रतिपक्षे-ऽव्याप्तेर्दुर्वारतया प्रयोज्यतायां विशिष्टान्तरविषयतानिष्ठसाक्षात्प्रयो-जकता निरूपितत्वस्यावश्यं निवेशनीयतया निरुक्तसत्प्रतिपक्षाव्याप्ति-

---

## विवेचनी

भयाभावसमानाधिकरणजलवद्ध्रदविषयिताप्रयोज्यायां ह्रदधर्मिक-वह्निजलाभावोभयवैशिष्ट्यावगाहित्वाभावाधिकरणतायां जलवद्ध्रदविषयितायाः साक्षात्प्रयोजकताविरहेण तदीयप्रयोजकतायां निरुक्तसत्प्रतिपक्षविषयित्वीय-प्रयोजकतायाः स्वप्रयोज्यप्रकृतपक्षतावच्छेदकावच्छिन्नधर्मिताकप्रकृतसाध्यता-वच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताकत्वाभावाधिकरणतानिष्ठभेद-प्रतियोगितावच्छेदकत्वसम्बन्धेन वैशिष्ट्यस्याक्षततया, जलवद्ध्रदविषयित्वीय-प्रयोजकतायाः लक्षणघटकत्वसम्भवात् तामादाय बाधघटिते निरुक्तसत्प्रतिपक्षे अव्याप्त्यभिधानं सङ्गच्छत एव ।

८०. जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकतादृशोभयाभाव-समानाधिकरणतादृशजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तेः दुर्वारतयेति ।

जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितायाः ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावं प्रति प्रयोजकतया ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वव्याप्यं यत् ह्रदधर्मिकवह्निजलाभावोभयवैशिष्ट्यावगाहित्वं तदभावं प्रत्यपि प्रयोजकता

विरहात्, निरुक्ततादृशत्वाऽनिवेशेनोक्तातिव्याप्तिविरहात् । साक्षात्प्रयोजकतानिरूपितत्वञ्च स्वनिरूपितप्रयोज्यतावदभाव प्रतियोगितावच्छेदकावच्छिन्नव्याप्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावावृत्तित्वसहिततत्प्रयोजकतानिरूपितत्वम्। उक्तस्थले जलवद्ध्रदविषयतानिष्ठप्रयोजकतानिरूपितस्य तादृशस्योक्तोभयावगाहित्वाभावाधिकरणतायामसत्त्वेन तत्र लक्षणगमनसम्भवात् ॥

---

## विवेचनी

सिद्ध्यति, व्यापकाभावप्रयोजकस्येत्यादिरीत्या ।

तथा च जनकत्वप्रयोजकत्वोभयघटितविशिष्टान्तरत्वस्य विवक्षणेऽपि निरुक्तस्थले जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकतादृशोभयाभावसमानाधिकरणतादृशजलवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकतादृशोऽभयवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति जनकताप्रयोजकतोभयघटितविशिष्टान्तरतावज्जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदनिरूपितविषयितायाः प्रयोजकतावत्त्वेन निरुक्तसत्प्रतिपक्षे जलवद्ध्रदात्मकबाधघटितजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदात्मकसत्प्रतिपक्षघटितेऽव्याप्तिर्दुरुद्धरैवेति भावः ।

अत्रापि जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकवह्निजलाभावोभयाभावसमानाधिकरणजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकवह्निजलाभावोभयवैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितात्मिकायाः विशिष्टान्तरविषयितायाः साक्षात्प्रयोजकत्वविरहेण तदीयप्रयोजकतायाः निरुक्तान्यतरसम्बन्धेन प्रयोजकताविशिष्टतया लक्षण- घटकत्वं बोध्यम् ।

साक्षात्प्रयोजकतानिरूपितत्वञ्च .. तत्प्रयोजकतानिरूपितत्वमिति । तथा च स्वावच्छिन्ननिरूपकताकविषयितानिष्ठयद्धर्मावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत् स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीयस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपावच्छिन्ननिरूपकताकविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नतद्धर्मावच्छिन्नप्रयोजकताविशिष्टप्रयोजकता-

विशिष्टप्रयोज्यतावदन्यप्रकृतपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वमिति विशिष्टान्तराऽघटितत्वदलार्थः पर्यवसितः ।

तद्धर्मावच्छिन्नप्रयोजकतावैशिष्ट्यं पूर्वनिरुक्तान्यतरसम्बन्धेन । विशिष्टान्तरविषयित्वीयप्रयोजकतावैशिष्ट्यं प्रयोज्यतायां स्वनिरूपितप्रयोज्यतावदभावप्रतियोगितावच्छेदकावच्छिन्नव्याप्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववृत्तित्वाभावस्वनिरूपितत्वोभयसम्बन्धेन ।

**अनुगमे विशेषः**– आधेयतावच्छेदकः द्वितीयसम्बन्धः स्वविशिष्टप्रयोज्यतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वम् । स्ववैशिष्ट्यं प्रयोज्यतायां स्वविशिष्टप्रयोजकताविशिष्टत्वसम्बन्धेन । स्ववैशिष्ट्यं प्रयोजकतायां स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टप्रयोजकताविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । तत्र प्रथमे स्वविशिष्ट्यं ७६ तमकोटावुक्तमेव । द्वितीये स्ववैशिष्ट्यं ७२तमकोटावुक्तमेव, प्रयोजकतावैशिष्ट्यं पूर्वोक्तसम्बन्धद्वयेन ।

प्रयोजकतावैशिष्ट्यं स्वनिरूपितप्रयोज्यताविशिष्टत्वस्वनिरूपितत्वोभयसम्बन्धेन । तत्र प्रथमे प्रयोज्यतावैशिष्ट्यं स्वाश्रयाभावप्रतियोगितावच्छेदकविशिष्टरूपावच्छिन्नप्रतियोगिताकाभाववृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । तत्र प्रतियोगितावच्छेदकवैशिष्ट्यं स्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तितानवच्छेदकत्व सम्बन्धेन[1]।

---

1. इदं तु यथाश्रुतपरिष्कारमनुसृत्य । निरुक्तान्यतरसम्बन्धेन प्रयोजकतावैशिष्ट्यं, स्वावच्छिन्नविषयितानिष्ठप्रयोजकतावैशिष्ट्यप्रतियोगिप्रयोजकतयोरेकधर्मावच्छिन्नत्वञ्च विवक्षित्वादर्शितपरिष्कारानुसारेण तु अयमनुगमे विशेषः । आधेयतावच्छेदकसम्बन्धः स्वविशिष्टरूपविशिष्टत्वम् एक एव । तत्र स्ववैशिष्ट्यं रूपे स्वावच्छिन्ननिरूपकताकविषयितावृत्तित्वसम्बन्धेन । तत्र वृत्तित्वं स्वरूपसम्बन्धेन । रूपवैशिष्ट्यं स्वविशिष्टप्रयोजकताविशिष्टप्रयोज्यतावत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्वोभयसम्बन्धेन । तत्र स्ववैशिष्ट्यं प्रयोजकतायां स्वाश्रयविषयितानिरूपकतावच्छेदकरूपविशिष्टत्वस्वावच्छिन्नप्रयोजकताविशिष्टत्वोभयसम्बन्धेन । तत्र प्रथमे रूपवैशिष्ट्यं स्वविशिष्टधर्मविशिष्टधर्मावच्छिन्नत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं धर्मे स्वविशिष्टप्रतीतिविषयविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं७६तमकोटावुक्तमेव ।

८१. नचैवमसम्भवः, सर्वत्र तत्प्रयोजकतानिरूपितप्रयोज्यतायां स्वनिरूपितप्रयोज्यतावदभावप्रतियोगितावच्छेदकस्य स्वावच्छिन्नव्याप्यतावच्छेदकतया तदवच्छिन्नाभाववृत्तित्वसत्वेन तदवृत्तित्वसहिततन्निरूपितत्वस्याप्रसिद्धेः, अत उक्तपरिष्कारासम्भवेनोभवद्ध्रदादावतिव्याप्तिर्दुर्वारैव । अनुपदोक्तसत्प्रतिपक्षघटितसत्प्रतिपक्षाव्याप्तिः विशेष्यदळघटकोन्नेयतावच्छेदकस्य एतद्दळप्रविष्टोन्नेयतावच्छेदकेन सह ऐक्यविवक्षया वारणीयेति वाच्यम् ॥

८२. तदवच्छिन्नव्याप्यतावच्छेदकत्वस्याधेयत्वस्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन तद्विशिष्टत्वरूप-

---

## विवेचनी

८१) विशेष्यदलघटकोन्नेयतावच्छेदकस्य एतद्दलप्रविष्टोन्नेयता वच्छेदकेन सह ऐक्यविवक्षया वारणीयेति ।

तथाच जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकवह्निजलाभावोभयाभावसमानाधिकरणतादृशजलवद्ध्रदात्मकसत्प्रतिपक्षे वह्निजलाभावो भयाभाववद्ध्रदत्वात्मकोन्नेयतावच्छेदकघटितस्य विशेष्यदलस्य, विशिष्टाऽन्तरत्वेन गृहीते जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदे तु वह्न्यभाववद्ध्रदत्वात्मकोन्नेयतावच्छेदकघटितविशिष्टान्तरत्वदलस्य सत्वेन एतद्दलद्वयघटकोन्नेयतावच्छेदकरूपयोः भेदान्न जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदस्य विशिष्टान्तरत्वेन ग्रहणसम्भवः । अपि तु वह्निजलाभावोभयाभावव्याप्यवद्ध्रदादिरूपस्य अन्यविधसत्प्रतिपक्षस्यैव । तद्विषयिताऽप्रयुक्तत्वस्य निरुक्तमहासत्प्रतिपक्षविषयिताप्रयुक्तोभयवैशिष्ट्यावगाहित्वाभावाधिकरणतायामक्षततत्वान्न तत्र सत्प्रतिपक्षेऽव्याप्तिरिति भावः ।

८२) तदवच्छिन्नव्याप्यतावच्छेदकत्वस्य ... तद्विशिष्टत्वरूपत्वादिति ।

तथा च निरुक्तविशिष्टान्तरविषयित्वीयप्रयोजकतावैशिष्ट्यं स्वनिरूपितप्रयोज्यतावदभावप्रतियोगितावच्छेदकविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तित्वधर्मवैशिष्ट्यं ७८तमकोटावुक्तमेव । द्वितीये स्वावच्छिन्नप्रयोजकतावैशिष्ट्यं स्वनिरूपितप्रयोज्यतावत्पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताकत्वाभावाधिकरणतानिष्ठभेदप्रतियोगितावच्छेदकतास्वानवच्छेदकानवच्छिन्नत्वान्यतरसम्बन्धेन ।

त्वात् । आधेयता च स्वावच्छिन्नसमानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकत्व सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगि-ताकभेदवत्त्वसम्बन्धेन । ईदृशस्य स्वावच्छिन्नव्याप्यतावच्छेदकत्वस्य स्वव्यावृत्तत्वेनासम्भवविरहात्, उक्तपरिष्कारस्य निर्दुष्टतयोक्तोभय-वद्ध्रदातिव्याप्तिविरहात् ॥

---

## विवेचनी

सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वनिरूपितत्वोभय-सम्बन्धेन । तत्र प्रथमे प्रतियोगितावच्छेदकवैशिष्ट्यं स्वावच्छिन्नसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदकत्व सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक-भेदवत्त्वसम्बन्धावच्छिन्नाधेयतास्वावच्छिन्नसमानाधिकरणाऽत्यन्ताभावप्रतियोगिता-वच्छेदकत्वोभयसम्बन्धेन ।

तत्र प्रयोजकतावैशिष्ट्यघटकतया प्रथमसम्बन्धस्य स्वनिरूपितप्रयोज्यतावद-भावेत्यादेः अप्रवेशे जलव्यापकनिरुक्तोभयाभावसमानाधिकरणजलवद्ध्रदादौ बाधविघटितसत्प्रतिपक्षेऽव्याप्तिः । प्रतियोगितावच्छेदकवैशिष्ट्यघटकतया द्वितीयसम्बन्ध-प्रवेशनादनुपदोक्तः अप्रसिद्धिनिबन्धनाऽसम्भवः परिहृतः । प्रथमसम्बन्धस्य आधेयताया अप्रवेशने मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिः । सत्प्रतिपक्षविषयित्वीयप्रयोजकता-वैशिष्ट्यस्य कस्यांचिदपि प्रयोज्यतायां प्रसिद्ध्यसम्भवेन तस्याः लक्षणघटक-त्वाऽसम्भवात् । वह्न्यभावव्याप्यवद्ध्रदविषयितायाः ह्रदधर्मिकवह्निवैशिष्ट्या-वगाहित्वाभावाधिकरणतां प्रति ह्रदधर्मिकवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहि-त्वाभावाधिकरणतां प्रत्यपि प्रयोजकत्वेन वह्न्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकता-निरूपितप्रयोज्यतावदभावप्रतियोगितावच्छेदकं ह्रदधर्मिकवह्निवैशिष्ट्यावगाहितात्वं, ह्रदधर्मिकवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहितात्वञ्च । तयोश्च परस्परावच्छिन्नं प्रति

---

प्रयोजकतावैशिष्ट्यं प्रयोज्यतायां स्वनिरूपितप्रयोज्यताविशिष्टत्वस्वनिरूपित-त्वोभयसम्बन्धेन । तत्र प्रथमे प्रयोज्यतावैशिष्ट्यं स्वाश्रयाभावप्रतियोगितावच्छेदक-विशिष्टरूपावच्छिन्नप्रतियोगिताकाभाववृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वसम्बन्धेन । तत्र प्रतियोगितावच्छेदकवैशिष्ट्यं स्वावच्छिन्न-प्रतियोगिताकाभाववद्वृत्तितानवच्छेदकत्वसम्बन्धेन ।

८३. नच जलव्यापकेत्युक्तसत्प्रतिपक्षघटकसत्प्रतिपक्षो मेयत्व-विशिष्टेऽतिव्याप्तिः, तत्र स्वविषयताप्रयोज्यायामुभयवैशिष्ट्यावगाहित्वा-भावाधिकरणतायान्निरुक्तस्य प्रयोज्यत्वस्याभावेन उक्तविशिष्टा-

---

विवेचनी

न्यूनवृत्तितावच्छेदकतया तादृशप्रतियोगितावच्छेदकविशिष्टधर्मत्वस्य तदुभयत्र अक्षतत्वात्,तत्र ह्रदधर्मिकवह्निवैशिष्ट्यावगाहितात्वावच्छिन्नप्रतियोगिता-काभावावृत्तित्वस्य ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावनिष्ठप्रयोज्यतायां बाधात् । ह्रदधर्मिवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहितात्वावच्छिन्नप्रतियोगिता-काभावावृत्तित्वस्य ह्रदधर्मिकवह्न्यभावव्याप्याभाववैशिष्ट्यावगाहित्वाभाव-निष्ठप्रयोज्यतायां बाधात्। वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायास्तु एकमात्रप्रयोज्यतानिरूपितत्वेन तत्रैव प्रयोज्यतायां तादृशप्रयोजकताविशिष्टत्वप्रसिद्ध्या तामादायैव लक्षणसमन्वयसम्भवात् ।

प्रयोजकतावैशिष्ट्यघटकतया द्वितीयसम्बन्धस्य स्वनिरूपितत्वस्य अप्रवेशे-ऽसम्भवः । तथा सति, वह्न्यभावव्याप्यवद्विषयित्वीयप्रयोजकतायाः वैशिष्ट्यस्य ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावीयप्रयोज्यतायामक्षतत्वात् वह्न्यभावव्याप्य-वद्विषयित्वीयप्रयोजकतानिरूपितप्रयोज्यतावदभावप्रतियोगि तावच्छेदकं यत् वह्न्यभाव-व्याप्यधर्मिकावृत्तित्ववैशिष्ट्यावगाहितात्वं, निरुक्तोभयसम्बधेन तद्विशिष्टत्वस्य ह्रदधर्मिकवह्निवैशिष्ट्यावगाहितात्वे अवर्तमानस्य अवृत्तित्वघटोभयवैशिष्ट्यावगाहि-तात्वे प्रसिद्धत्वात् । तदवच्छिन्नप्रतियोगिताकाभावावृत्तित्वस्य ह्रदधर्मिकवह्नि-वैशिष्ट्यावगाहित्वाभावीयप्रयोज्यतायामक्षतत्वात् ।

अनुगमे विशेषः- प्रतियोगितावच्छेदकवैशिष्ट्यम् आधेयतास्वावच्छिन्न-समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । तत्राधेयता-स्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ॥

८३) जलव्यापकेत्युक्तसत्प्रतिपक्षघटकसत्प्रतिपक्षे मेयत्वविशिष्ट इति

जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकवह्निजलाभावोभया-भावसमानाधिकरणजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदे घटको यः

न्तराघटिततत्व सत्वात्, अतः पूर्वपरिष्कारं परित्यज्य तादृशत्वमेव शरणीकरणीयमित्युक्तातिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

८४. मेयत्वविशिष्टपूर्वोक्तसत्प्रतिपक्षेऽतिव्याप्तिवारणाय स्वविषयतानिष्ठप्रयोजकतानिरूपितत्वस्याप्युक्तविधस्यैव निवेशात्तादृशत्वस्य सर्वथैवानिवेशेनोक्तोभयवद्ध्रदातिव्याप्तेर्दुरनिरस्तत्वात् ॥

---

विवेचनी

सत्प्रतिपक्षः जलव्यापकवहन्यभावसमानाधिकरणजलवद्ध्रदः मेयत्वविशिष्टे तत्रातिव्याप्तिरित्यर्थः ।

अतिव्याप्तिरिति ।

मेयत्वविशिष्टाऽवान्तरसत्प्रतिपक्षविषयितया व्यापकाभावप्रयोजकस्यैत्यादिरीत्या प्रयोज्या या निरुक्तोभयवैशिष्ट्यावगाहित्वाभावाधिकरणता, तत्र विशिष्टान्तरभूतावान्तरसत्प्रतिपक्षविषयितायाः साक्षात्प्रयोजकताविरहेण मेयत्वविशिष्टे तत्र लक्षणसमन्वयसम्भवादिति भावः ।

८४. स्वविषयतानिष्ठप्रयोजकतानिरूपितत्वस्याप्युक्तविधस्यैव निवेशादिति ।

तथा च स्वावच्छिन्नविषयितानिष्ठप्रयोजकताविशिष्टप्रयोज्यतावत्त्वमेव प्रकृतपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां निवेशनीयम् । प्रयोजकतावैशिष्ट्यं स्वनिरूपितप्रयोज्यतावदभावप्रतियोगितावच्छेदकविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तित्वाभावस्वनिरूपितत्वोभयसम्बन्धेन । तत्र प्रथमसम्बन्धप्रवेशः अनुपदोक्तमेयत्वविशिष्टसत्प्रतिपक्षातिव्याप्तेः वारणाय। तत्र प्रतियोगितावच्छेदकवैशिष्ट्यं स्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्नाधेयतास्वावच्छिन्नसमानाधिकरणत्यन्ताभावप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । तत्र आधेयतासम्बन्धाऽप्रवेशे वहन्यभावव्याप्यवद्ध्रदेऽव्याप्तिः पूर्वोक्तदिशैव[1] अवसेया ।

---

1. वहन्यभावव्याप्यवद्ध्रदविषयित्वीयप्रयोजकतायाः प्रयोज्यताद्वयनिरूपितत्वम्। तत्र कस्याञ्चिदपि प्रयोज्यतायां प्रयोजकतावैशिष्ट्यं न घटते इत्याद्युक्तदिशा ।

व्यापकताघटितसत्प्रतिपक्षे तु समन्वयो भवति। तद्विषयित्वीया या व्यापकताप्रकारक-निश्चयवैशिष्ट्यसाधारणसमुदायत्वावच्छिन्ना प्रयोजकता प्रकृतपक्षधर्मिक-साध्यवैशिष्ट्यावगाहित्वाभावमात्रनिरूपिता, तन्निरूपितप्रयोज्यतावदभाव-प्रतियोगितावच्छेदकावच्छिन्नन्यूनवृत्तितावच्छेदकतायाः पक्षधर्मिक-साध्यवैशिष्ट्यावगाहितात्वे विरहेण तदवच्छिन्नाभावीयप्रयोज्यतायाः लक्षणघटकत्वसम्भवात् । स्वावच्छिन्नन्यून वृत्तितावच्छेदकत्वस्याऽप्रवेशे तथाविधप्रयोज्यत्वाऽप्रसिद्ध्या असम्भवः ।

द्वितीयसम्बन्धस्य स्वनिरूपितत्वस्याऽप्रवेशे, ह्रदो वह्निधूमोभयवानित्यत्र मेयत्वविशिष्टे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदेऽतिव्याप्तिः । तद्विषयितानिष्ठप्रयोजकतावैशिष्ट्यस्य जलव्यापकवह्न्यभाव समानाधिकरणजल-वद्ध्रदविषयितात्मकविशिष्टान्तरविषयिताऽप्रयोज्यह्रदधर्मिकधूमवैशिष्ट्या-वगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतायामक्षतत्वात् ।

अत्रानुगमे विशेषः- आधेयतावच्छेदकः प्रथमसम्बन्धः न स्वावच्छिन्न-विषयिताप्रयुक्तत्वम्, अपि तु स्वावच्छिन्ननिरूपकत्ताकविषयितानिष्ठप्रयोजकता-विशिष्टप्रयोज्यतावत्त्वम् । तत्र प्रयोजकतावैशिष्ट्यं स्वनिरूपितप्रयोज्यताविशिष्टत्व-स्वनिरूपितत्वोभयसम्बन्धेन । प्रयोज्यता वैशिष्ट्यं ८०तम कोटावुक्तमेव । तत्र प्रतियोगितावच्छेदकवैशिष्ट्यं तु ८२तमकोटावुक्तमेव । इदं यथाश्रुते ।

उक्तनिष्कर्षानुसारेण तु अयमनुगमे विशेषः । आधेयतावच्छेदक सम्बन्धः स्वविशिष्टरूपविशिष्टत्वम् । तत्र रूपवैशिष्ट्यं स्वविशिष्ट प्रयोजकताविशिष्ट-प्रयोज्यतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वावच्छिन्नप्रयोजकताविशिष्टप्रयोज्यतावत्त्वोभयसम्बन्धेन । तत्रोभयत्र प्रयोजकतावैशिष्ट्यं प्रयोज्यतायां स्वनिरूपितत्वस्वनिरूपितप्रयोज्यताविशिष्टत्वसम्बन्धद्वयेन । अन्यत्सर्वं ८०तम कोटावुक्तमेव ।

इदन्त्ववधेयम् । सत्प्रतिपक्षलक्षणे सत्प्रतिपक्षोन्नायकवारकदलघटकेन विरोधिविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्त्वविशेषणेन विरोधिविषयितानिष्ठ-साक्षात्प्रयोजकतानिरूपितप्रयोज्यत्वस्य विवक्षणे, तेनैव दलेन काञ्चनमयत्वाभाव-व्याप्यवद्ध्रदादौ काञ्चनमयत्वाभावव्याप्यवद्वह्न्यादौ चाऽतिव्याप्तेर्वारणात् तदुभयवारणाय पृथग् दलद्वयोपादानं नावश्यकमिति ।

८५. नच स्वविषयतानिष्ठप्रयोजकतानिरूपितत्वस्येदृशस्य निवेशे उक्तोभयसाध्यके जलव्यापकवह्न्यभावसमानाधिकरणजलवद्धदरूपसत्प्रतिपक्षेऽव्याप्तिः । तत्र ह्रदधर्मिकोभयवैशिष्ट्यावगाहित्वाभावरूपपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतायां पूर्वोक्त स्वविषयतानिष्ठप्रयोजकतानिरूपितत्वस्याभावात्; तथाचोक्तदिशातिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

८६. पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावपदेन ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावस्यैव उपादानात्तदधिकरणतानिष्ठप्रयोज्यतायां च स्वविषयतानिष्ठसाक्षात्प्रयोजकतानिरूपितत्वस्यापि सम्भवादव्याप्त्यतिव्याप्त्योर्दूरोत्सारितत्वात् ॥

८७. नच पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावपदेन पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकतापर्याप्त्याधिकरणधर्मावच्छिन्नप्रकारताकत्वाभाव एव विवक्षणीयः, अन्यथा, ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवन्मेयत्वविशिष्टह्रदेऽतिव्याप्तिः, तत्र मेयत्वविशिष्टह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वाभावाधिकरणतायां तादृशह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावव्याप्यत्वावच्छिन्नविषयताया एव प्रयोजकतया निरुक्तविशेषणाक्रान्तपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वाभावप्रयोजकत्वसत्त्वात् । एवं जलाभावसाध्यकस्थले मेयत्वविशिष्टं यत्तादृशसाध्याभावव्याप्यं

-------------------------------------------

विवेचनी

८७) अन्यथा ह्रदो वह्निमान् इत्यादौ वह्न्यभावव्याप्यवन्मेयत्व विशिष्ट ह्रदेऽतिव्याप्तिरिति ।

इदमत्र बोद्ध्यम् । ह्रदत्वावच्छेदेन वह्निसाध्यके नाऽतिव्याप्तिः विवक्षिता । तत्र ह्रदत्वव्यापकसंयोगस्यैव साध्यतावच्छेदकसम्बन्धतया धर्मितावच्छेदकैकदेशव्यापकताभानस्यानुभवविरुद्धतया च तत्र ह्रदत्वपर्याप्तावच्छेदकताकविशेष्यतानिरूपितवह्नित्वावच्छिन्नतादृशसंयोगसम्बन्धावच्छिन्नप्रकारताकत्वाभावाधिकरणताया एव

तद्वद्ध्रदेऽतिव्याप्तिः । तत्र पक्षधर्मिकमेयत्वविशिष्टतादृशसाध्याभाव-व्याप्याभावत्वावच्छिन्नप्रकारताकत्वाभावाधिकरणतायां निरुक्तविशिष्टान्तरविषयत्वाप्रयोज्यत्वस्य स्वविषयताप्रयोज्यत्वस्य सत्वात् । अतः पक्षतावच्छेदकतासाध्यतावच्छेदकता पर्याप्त्योर्निवेशावश्यकत्वेनोक्तपरिष्कारस्य त्याज्यतया अतिव्याप्तिर्दुर्वारैवेति वाच्यम् ॥

---

## विवेचनी

लक्षणघटकत्वात् । मेयत्वविशिष्टह्रदत्वावच्छिन्नविशेष्यतानिरूपित-वह्नित्वावच्छिन्नप्रकारताकत्वाभावाधिकरणतामादाय अतिव्याप्तिदानाऽसम्भवात् ।

न च ह्रदत्वावच्छेदेन वह्निमत्ताबुद्धिं प्रति ह्रदत्वसामानाधिकरण्येन वह्न्यभाववत्तानिश्चयस्येव तद्व्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकतया, 'प्रमेयह्रदो वह्न्यभावव्याप्यवान्' इत्याकारकनिश्चयस्य तादृशतया तद्विषयतावच्छेदक-वह्न्यभावव्याप्यवत्प्रमेयह्रदत्वावच्छिन्ननिरूपकताकविषयितायाः शुद्धह्रदत्वावच्छिन्न-धर्मिकतद्व्यापकसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताकत्वाभावाधिकरणतां प्रति प्रयोजकतायाः अक्षततया ह्रदत्वावच्छेदेन वह्निसाध्यकेऽपि निरुक्तविशिष्टेऽतिव्याप्ति-रुपपद्यत इति वाच्यम् ।

तथासति, मेयत्वविशिष्टह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वा-वच्छिन्नप्रकारताकत्वाभावाधिकरणतायाम् इत्याद्यग्रिमग्रन्थाऽसङ्गतिप्रसङ्गात् ।

पक्षतावच्छेदकतापर्याप्तेः निवेशोत्तरमपि ह्रदत्वावच्छेदेन वह्निसाध्यके वह्न्यभावव्याप्यवन्मेयत्वविशिष्टह्रदेऽतिव्याप्तितादवस्थ्येन, तत्रातिव्याप्तिवारकतया पक्षतावच्छेदकतापर्याप्तिनिवेशस्य सार्थकताया असम्भवाच्च ।

अपि तु, ह्रदत्वसामानाधिकरण्येन वह्निसाध्यक एव । तत्रापि मेयत्वविशिष्टह्रदत्वसमानाधिकरण्येन वह्न्यभावव्याप्ये नातिव्याप्तिः । तन्निश्चयस्य मेयत्वविशिष्टह्रदत्वसमानाधिकरण्येन वह्निमत्ताबुद्धिं प्रत्यविरोधित्वात् । तदवच्छेदेन वह्निमत्ताबुद्धिं प्रति विरोधितावत्त्वेऽपि, ह्रदो वह्निमानित्यत्र मेयत्वविशिष्टह्रदत्वावच्छेदेन वह्निमत्तावगाहितायाः लक्षणघटकत्वाभावात्[1] ।

---

1. संसर्गतावच्छेदकतापर्याप्तिनिवेशस्य सत्वेन मेयत्वात्मकाधिकपदार्थघटित-धर्मावच्छिन्नसंसर्गावगाहितायाः लक्षणघटकत्वाऽसम्भवात् ।

किन्तु, मेयत्वविशिष्टह्रदत्वावच्छेदेन वह्न्यभावव्याप्ये एवाऽतिव्याप्तिर्विवक्षिता । तन्निश्चयस्य प्रमेयह्रदत्वसामानाधिकरण्येन वह्नित्वावच्छिन्नवत्ता बुद्धिं प्रति प्रतिबन्धकतया, तद्विषयितायाः प्रमेयह्रदत्वावच्छिन्नधर्मिताक[1]वह्नित्वावच्छिन्नसंयोगसंसर्गावच्छिन्न-प्रकारताकत्वाभावाधिकरणतां प्रति प्रयोजकतायाः अक्षतत्वात् ।

इदमपि, सत्यन्तविशेष्यदलघटकाभावप्रतियोगितावच्छेदककुक्षावपि पक्षतावच्छेदकता पर्याप्तिः न निवेशितेत्यभिप्रायेण । तथा च प्रमेयह्रदत्वावच्छिन्न-धर्मिकवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणतामादायैव वह्न्यभावव्याप्यवत्प्रमेयह्रद-विषयितायां सत्यन्तविशेष्यदले उपपादनीये ।

इत्थञ्च सत्यन्तदले पक्षतावच्छेदकतापर्याप्तिप्रवेशनेनाऽपि इयम् अतिव्याप्तिः वार्यते । न च तावता एतत्कोटेरसङ्गतिराशङ्कनीया, विशिष्टान्तराऽघटितत्वदले अधिकरणत्वाभावीयप्रतियोगितावच्छेदककुक्षौ साध्यतावच्छेदकैकदेशं परित्यज्यैव सत्प्रतिपक्षविशेषे समन्वयस्य पूर्वकोटौ प्रदर्शिततया, अत्र कोटौ साध्यतावच्छेदकता-पर्याप्तेः प्रवेशनीयताया एव प्रदर्शनीयत्वात् ।

न तु एतद्दले पक्षतावच्छेदकतापर्याप्तेः प्रवेशनीयतायाः प्रदर्शनीयता, प्रकृते अनुपयोगात् । लक्षणे पक्षतावच्छेदकतापर्याप्तिप्रवेशनस्य सार्थक्यप्रदर्शनं तु साध्यतावच्छेदकतापर्याप्तिप्रवेशनसार्थक्योपपादनप्रसङ्गेनेति ध्येयम् ।

विशिष्टान्तराऽघटितत्वदले साध्यतावच्छेदकतापर्याप्तिप्रवेशस्य आवश्यकतां प्रदर्शयति- **एवं जलाभावसाध्यकस्थल** इत्यादिना ।

तथा च विशिष्टान्तराऽघटितत्वदले साध्यतावच्छेदकतापर्याप्तेरनिवेशे ह्रदो जलाभाववान् इत्यत्र मेयत्वविशिष्टं यत् जलाभावाभावव्याप्यं तद्वद्ध्रदेऽतिव्याप्तिरिति भावः ।

ननु 'ह्रदो मेयत्व विशिष्टजलाभावाभावव्याप्यवान्' इत्याकारकस्य जलाभावभावव्याप्ये मेयत्ववैशिष्ट्यावगाहिनो निश्चयस्य 'ह्रदो मेयत्वविशिष्टजला-भाववान्' इत्याकारिकां जलाभावे जले वा मेयत्ववैशिष्ट्यम् अवगाहमानबुद्धिं प्रति न प्रतिबन्धकत्वम्, ग्राह्याभावानवगाहित्वादिति मेयत्वविशिष्टजलाभावप्रकारता-कत्वाभावाधिकरणतायाः न मेयत्वविशिष्टजलाभावाभावव्याप्यवद्ध्रदविषयिता

1. विशेष्यतावच्छेदकतापर्याप्तेरनिवेशिततया मेयत्वाद्यात्मकाधिक-पदार्थघटितधर्मावच्छिन्नविशेष्यतायाः लक्षणघटकत्वात् ।

प्रयोज्यत्वम् । मेयत्ववैशिष्ट्यमेवाऽनवगाहमानां 'ह्रदो जलाभाववान्' इत्याकारिकां बुद्धिं प्रति 'ह्रदो मेयत्वविशिष्टजलाभावाभावव्याप्यवान्' इत्याकारकस्य दर्शितनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकतायाः अधिकन्त्वित्यादिन्यायेनाऽक्षततया-तद्विषयिताप्रयोज्यत्वस्य ह्रदधर्मिकजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्वेऽपि प्रकृते नोपयोगः, प्रयोज्यतावच्छेदककोटिप्रविष्टायाः प्रकृतसाध्यता-वच्छेदकातिरिक्तानवच्छिन्नायाः प्रकारतायाः साध्यतावच्छेदकतापर्याप्तिनिवेशेन अवारणादित्यतः मेयत्वविशिष्टजलाभावाभावव्याप्यवद्ध्रदविषयिताप्रयोज्यां प्रकृतसाध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रकारताघटितधर्माभावाधिकरणतां प्रदर्शयति-**तत्र पक्षधर्मिकमेयत्वविशिष्टतादृशसाध्याभावव्याप्याभावत्वावच्छिन्न प्रकारताकत्वाभावाधिकरणतायामिति ।**

तथा च विशिष्टन्तराऽघटितत्वदले अभावप्रतियोगितावच्छेदककुक्षौ साध्यतावच्छेदकतापर्याप्तेरनिवेशे, ह्रदो जलाभाववानित्यत्र जलाभावत्वस्य साध्यतावच्छेदकतया अवच्छेदककोटिप्रविष्टानाञ्चावच्छेदकतया ह्रदत्वा-वच्छिन्नविशेष्यतानिरूपितमेयत्वविशिष्ट[1] जलाभावाभावव्याप्याभावत्वा-वच्छिन्नप्रकारताकत्वं प्रकृतपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्न-विशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकनिष्ठावच्छेदकताकप्रकारताकत्वपदेन धर्तुं शक्यते । तदाभावाधिकरणतां प्रति ह्रदो मेयत्वविशिष्ट जलाभावाभाव-व्याप्यवानितिनिश्चयीयायाः मेयत्वविशिष्टजलाभावाभावव्याप्य वद्ध्रदविषयितायाः प्रयोजकत्वं वर्तते, अस्य निश्चयस्य तदभाववत्तानिश्चयमुद्रया निरुक्तह्रदत्वा-वच्छिन्नधर्मिकमेयत्वविशिष्टजलाभावाभावव्याप्याभावत्वावच्छिन्नप्रकारताकबुद्धिं प्रति प्रतिबन्धकत्वात् । मेयत्वविशिष्टजलाभावाभावव्याप्यवद्ध्रदविषयिताप्रयोज्यां ह्रदधर्मिकमेयत्वविशिष्टजलाभावाभावव्याप्याभाव- वैशिष्ट्यावगाहित्वाभावाधिकरणतां प्रति जलाभावाभावव्याप्यवद्ध्रदविषयितात्मिकायाः विशिष्टान्तरविषयितायाः प्रयोजकत्वं नास्ति । विशिष्टाभावबुद्धिं प्रति विशेष्यवत्तानिश्चयस्याऽविरोधित्वात्, विशिष्टवत्तानिश्चयस्यैव विरोधित्वादिति मेयत्वविशिष्टजलाभावाभावव्याप्यवद्ध्रदस्य विशिष्टान्तराऽघटितत्व-दलाक्रान्तत्वमव्याहतम् ।

---

1. मेयत्वविशिष्टत्वं जलाभावाभावव्याप्ये बोध्यम् ।

८८. अधिकव्यावृत्तन्यूनसाधारणपर्याप्तेरेवात्र निवेशात्; तथाहि-पक्षतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यतानिरूपित-साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिप्रकारताकत्वाभाव एवात्र निवेश्यते; वृत्तित्वं चोभयत्र स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्य-नुयोगितावच्छेदकत्वसम्बन्धेन; एवञ्च मेयत्वघटितोक्त-

---

## विवेचनी

'ह्रदो जलाभावाभाववान्' इत्याकारकविरोध्यनुमितिनिरूपितजनकतायाः 'ह्रदो जलाभावाभावव्याप्यवान्' इत्याकारकनिश्चये इव 'ह्रदो मेयत्वविशिष्टजलाभावा-भावव्याप्यवान्' इत्याकारके जलाभावाभाव व्याप्यांशे मेयत्ववैशिष्ट्यमवगाहमाने निश्चये अधिकन्त्वित्यादिन्यायेन अक्षततया, तदनतिरिक्तवृत्तेः मेयत्वविशिष्टजलाभावाभाव-व्याप्यवद्ध्रद विषयितयाः विशेष्यदलक्रान्तत्वं सम्भवति ।

'ह्रदो जलाभाववान् इतिबुद्धिं प्रति 'ह्रदो मेयत्वविशिष्टजलाभावाभावव्याप्य-वान् इत्याकारकस्य दर्शितनिश्चयस्य तदभावव्याप्यवत्तानिश्चय मुद्रया प्रतिबन्धकता तुल्यरीत्याऽक्षतैव । अतस्तद्विषयितायाः सत्यन्तदलाक्रान्तत्वं सम्भवति ।

तथा च सत्यन्तदले विशेष्यदले च साध्यतावच्छेदकतापर्याप्तेः निवेशे कृतेऽपि विशिष्टान्तराऽघटितत्वदलेऽनिवेशे इयमतिव्याप्तिः प्रसज्यते । विशिष्टान्तराऽघटितत्वदले तन्निवेशे तु ह्रदधर्मिकजलाभाववैशिष्ट्यावगाहित्वाभावाधिकरणतायाः एव लक्षणघटकतया, मेयत्वविशिष्टजलाभावाभावव्याप्यवद्ध्रदविषयिताप्रयोज्यायां तत्र विशिष्टान्तरभूतजलाभावभावव्याप्यवद्ध्रदविषयितायाः व्यापकतावच्छेदकरूपेण प्रयोजकतावत्तया अतिव्याप्तिवारणसम्भव इति ।

८८) अधिकव्यावृत्तन्यूनसाधारणपर्याप्तेरेवात्र निवेशादिति ।

तथासति, अनुगमस्तु - पक्षतावच्छेदकताविशिष्टधर्मवत्त्वम् । पक्षतावच्छेद-कतावैशिष्ट्यं स्वपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टविशेष्यतानिरूपितप्रकृतसाध्यता-वच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टप्रकारताकत्वाभावाधिकरणताविशिष्टत्व-सम्बन्धेन । धर्मवैशिष्ट्यमुभयत्र आधेयतासम्बन्धेन । सा चोभयत्र स्वावच्छेदक-तात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितापर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अधिकरणतावैशिष्ट्यम् आधेयतासम्बन्धेन । सा च स्वविशिष्टरूपविशिष्टत्व-

विशिष्टद्वये नातिव्याप्तिः, ह्रदत्वनिष्ठपक्षतावच्छेदकतापर्याप्त्यनु-योगितावच्छेदकतद्व्यक्तित्वे मेयत्वह्रदत्वोभयावच्छिन्नविशेष्यतायाः स्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनासत्वादुक्तो-भयावच्छिन्नविशेष्यताया असङ्ग्रहात्; एवं, जलाभावसाध्यकस्थलेऽपि मेयत्वघटिततादृशसाध्याभावव्याप्याभावत्वावच्छिन्नप्रकारताया अभावत्वनिष्ठसाध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्वे निरुक्तसम्बन्धेनावर्तमानतया तस्यापि वारणात् । वह्निजलाभावोभय-साध्यस्थले च वह्नित्वनिष्ठसाध्यतावच्छेदकतापर्याप्त्यनुयोगिता-वच्छेदकतद्व्यक्तित्वे वह्नित्वावच्छिन्नप्रकारतायाः निरुक्तसम्बन्धेन वर्तमानतया ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्न-प्रकारताया अपि प्रतियोगिकोटौ संग्रहसम्भवात् । एवञ्च निरुक्तपरि-ष्कारस्य निर्दोषतया निरुक्तातिव्याप्तिर्निरस्तैवेति ॥

८९. नच तादृशप्रकारताकत्वत्वावच्छिन्नाभावस्यैव पक्षधर्मिक-साध्यवैशिष्ट्यावगाहित्वाभावपदेन विवक्षणीयतया वह्निजला-भावोभयसाध्यकस्थले केवलजलाभावत्वावच्छिन्नप्रकारता-साधारणतादृशप्रकारताकत्वत्वावच्छिन्नाभावाधिकरणतायाः केवलवह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयताप्रयोज्यत्वाभावात्, तत्स्थलीयतादृशसत्प्रतिपक्षेऽव्याप्त्या निरुक्तपरिष्कारो न सम्भवत्येवे-त्यतिव्याप्तिरिति वाच्यम् ॥

---

विवेचनी

सम्बन्धावच्छिन्ना । तत्र वैशिष्ट्यं ८४तम कोटावुक्तमेव ।

८९) केवलजलाभावत्वावच्छिन्नप्रकारतासाधारणतादृशप्रकारता-कत्वत्वावच्छिन्नाभावाधिकरणतायाः केवलवह्न्यभावव्याप्यवद्ध्रद-त्वावच्छिन्न विषयताप्रयोज्यत्वाभावादिति ।

ह्रदो वह्निजलाभावोभयवानित्यत्र वह्न्यभावव्याप्यवद्ध्रदविषयिताप्रयोज्यत्वं प्रकृतपक्षताच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यतानिरूपितप्रकृत-साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिप्रकारताकत्वसामान्या-

१०. तादृशप्रकारताकत्वनिष्ठप्रतियोगिताकाभावस्यैवानवगाहित्वा-भावान्तेन विवक्षणात् । निरुक्तसामान्याभावाविवक्षणेन उक्ताव्याप्त्य-प्रसक्त्या उक्तपरिष्कारेणैव उक्तातिव्याप्तेर्वारणीयत्वात् ॥

॥ इति श्रीरामशास्त्रिविरचिता सत्प्रतिपक्षशतकोटिः संपूर्णा ॥

****************************************************************

----------------------------------------------------------------

विवेचनी

भावाधिकरणतायां नास्ति । तादृशप्रकारताकत्वसामान्यान्तर्गतं यत् ह्रदधर्मिकजलाभाव-प्रकारताकत्वं तदभावाधिकरणतायां वह्न्यभावव्याप्यवद्ध्रदविषयिताप्रयोज्यत्वस्य विरहादिति भावः ।

१०) वारणीयत्वादिति ।

तथा च यद्रूपावच्छिन्नविषयिताशाल्यनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दित-निश्चयाऽव्यवहितोत्तरानुमितित्वाऽव्यापकः प्रकृतपक्षधर्मिकपक्षतावच्छेदकवैशिष्ट्या-वगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति, यद्रूपावच्छिन्नविषयिताशाल्यनाहार्याऽप्रामाण्य-ज्ञानाऽनास्कन्दितनिश्चयाऽव्यवहितोत्तरानुमितित्वाऽव्यापकः प्रकृतसाध्यधर्मिकसाध्यता-वच्छेदकवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति, यद्रूपावच्छिन्नविषयिताशाल्य-नाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः विरोधिविषयिता-प्रयोज्यतावच्छेदकयद्धर्मविशिष्टः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति, यद्रूपावच्छिन्नविषयिताशाल्यनाहार्याप्रामाण्यज्ञानाऽनास्कन्दित-निश्चयाव्यवहितोत्तरानुमितित्वव्यापकः विरोधिविषयिताप्रयोज्यतावच्छेदकतद्धर्मविशिष्टः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः, तद्रूपावच्छिन्नविषयितावच्छिन्नानुमितिनिष्ठ-जन्यतानिरूपितजनकता अनाहार्याप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयीययद्रूपावच्छिन्न-निरूपकताकविषयिताव्यापिका तद्रूपावच्छिन्नत्वमिति सत्प्रतिपक्षलक्षणनिष्कर्षः । अनुगमस्तु ५६तम कोटिव्याख्यान उपदर्शित एव । विशिष्टान्तराऽघटितत्वदलनिष्कर्षस्तु, स्वावच्छिन्नविषयितानिष्ठयद्धर्मावच्छिन्नप्रयोजकतनिरूपितसाक्षात् प्रयोज्यतावत्त्वे सति, स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदककिञ्चिद्रूपावच्छिन्ननिरूपकताक-स्वावच्छिन्नविषयिताऽव्यापकविषयताशून्यज्ञानीयविषयितात्वावच्छिन्नव्यापकतावच्छेदक-

रूपावच्छिन्ना निरुक्तान्यतरसम्बन्धेन तद्धर्मावच्छिन्नप्रयोजकताविशिष्टा या प्रयोजकता तन्निरूपितसाक्षात्प्रयोज्यतावदन्यत्वे सति, प्रकृतपक्षतावच्छेदकतापर्याप्त्यनुयोगिता-वच्छेदकधर्मवृत्तिवशेष्यता-निरूपितप्रकृतसाध्यतावच्छेदकतापर्याप्त्यनुयोगिता-वच्छेदकधर्मवृत्तिप्रकारताकत्वनिष्ठप्रतियोगिताको योऽभावः तादृशाभावकत्वमिति ।

इदमत्र बोध्यम्- सत्प्रतिपक्षविषयिताप्रयोज्यं पक्षधर्मिकसाध्य-वैशिष्ट्यावगाहित्वाभावं प्रति बाधादिविषयितायाः नियमेन प्रयोजकतया, तामादायाऽसम्भवप्रसङ्गस्य वारणाय अधिकरणतापर्यन्तानुधावनेऽपि कालीनत्वघटित-विशिष्टविषयितां विशिष्टान्तरविषयितात्वेनादाय व्यापकताघटितसत्प्रतिपक्ष-मात्रेऽव्याप्तेर्वारणाय विशिष्टान्तरविषयितायाम् अव्यापक विषयिताशून्यज्ञानीयत्वं; सत्प्रतिपक्षघटकबाधविषयिताम् आदाय सत्प्रतिपक्षविशेषेऽव्याप्तेः वारणाय विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां प्रयोज-कताविशिष्टान्यत्वञ्च अवश्यन्निवेश्यमेव आपतितम् ।

इत्थञ्चावश्यं निवेशनीयाभ्याम् आभ्यामेव विशेषणाभ्यां क्रमशः सत्प्रतिपक्षाऽघटकानां तद्घटकानां च बाधादीनां विषयिता आदाय प्रसक्त दोषस्य वारणसम्भवादधिकरणतानिवेशनं नावश्यकम् ।

विशिष्टान्तराऽघटितत्वस्य अयमनुगमः । पक्षतावच्छेदकता-विशिष्टधर्मवत्त्वमिति ।

पक्षतावच्छेदकतावैशिष्ट्यं स्वपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्ति-विशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मवृत्ति-प्रकारताकत्वाभावविशिष्टत्वसम्बन्धेन । तत्राभाववैशिष्ट्यम् आधेयतासम्बन्धेन । सा च स्वविशिष्टरूपविशिष्टत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं स्वावच्छिन्ननिरूपक-ताकविषयितावृत्तित्वसम्बन्धेन । रूपवैशिष्ट्यं स्वविशिष्टप्रयोजकताविशिष्ट-प्रयोज्यत्तावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व-स्वावच्छिन्नप्रयोजकताविशिष्टप्रयोज्यतावत्त्वोभयसम्बन्धेन ।

तत्र प्रथमे स्ववैशिष्ट्यं स्वाश्रयविषयितानिरूपकतावच्छेदकरूप-विशिष्टत्वस्वावच्छिन्नप्रयोजकताविशिष्टत्वोभयसम्बन्धेन । तत्र प्रथमे निरूपकतावच्छेदकरूपवैशिष्ट्यं स्वविशिष्टधर्मविशिष्टधर्मावच्छिन्नत्वसम्बन्धेन । तत्र स्ववैशिष्ट्यं धर्मे स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं

स्वावच्छिन्नविषयिताशून्यत्वस्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वोभयसम्बन्धेन। धर्मवैशिष्ट्यं धर्मे स्वावच्छिन्ननिरूपकताकानाहार्याप्रामाण्यज्ञानाऽनास्कन्दित निश्चयीय-विषयितात्वावच्छिन्न समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन । द्वितीये स्वावच्छिन्नप्रयोजकत-ावैशिष्ट्यं स्वनिरूपितप्रयोज्यतावत्पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताकत्वाभावाधिकरण-तानिष्ठभेदप्रतियोगितावच्छेदकत्वस्वानवच्छेदकाऽनवच्छिन्नत्वान्यतरसम्बन्धेन ।

प्रथमे द्वितीये च प्रयोजकतावैशिष्ट्यं प्रयोज्यतायां स्वनिरूपितप्रयोज्यता-विशिष्टत्वस्वनिरूपितत्वोभयसम्बन्धेन । तत्र प्रथमे प्रयोज्यतावैशिष्ट्यं स्वाश्रयाभावप्रति-योगितावच्छेदकविशिष्टरूपावच्छिन्नप्रतियोगिताकाभाववृत्तित्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन । तत्र प्रतियोगितावच्छेदक-वैशिष्ट्यम् आधेयतास्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदक-त्वोभयसम्बन्धेन । आधेयता स्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगिता-वच्छेदकत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

बाधादिघटितसत्प्रतिपक्षेषु बाधादिविशिष्टान्तरविषयितामादाय नाऽव्याप्ति प्रसङ्गः। तथाहि । जलव्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदविषयित्वीय-प्रयोजकतायाः निरुक्तान्यतर सम्बन्धेन वैशिष्ट्यस्य समानाधिकरणजलवद्ध्रदविषयि-त्वीयप्रयोजकतायां विरहात् तस्याः बाधविषयित्वीयप्रयोजकतायाः लक्षणघटकत्वमेव नास्ति । अतस्तत्र जलवद्ध्रदाद्यात्मकविशिष्टान्तरविषयित्वीयप्रयोजकतामादाय लक्षणसङ्गमनं सम्भवति ।

घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमदभावे नाऽव्याप्तिः । तन्निश्चये हि प्रतिबन्धकताद्वयम् अनिवार्यम् । 'घटत्वव्यापको घटत्ववद्भेदः इति निश्चयविशिष्टे 'घटत्ववान् अभावः इति निश्चये सति तादृशघटत्ववत्ताबुद्धिप्रति-बन्धानुरोधेन तादृशनिश्चयवैशिष्ट्यावच्छिन्ना एका प्रतिबन्धकता । 'घटत्वव्यापकघटत्व-वद्भेदकालीनघटत्वाभावाभाववदवृत्तिमान् अभावः इति निश्चये 'घटत्वव्यापक-त्वाभाववति घटत्वव्यापकताप्रकारकमिदं ज्ञानम् इत्यप्रामाण्यग्रहे सत्यपि तादृशघटत्व-वत्ताबुद्धेः अनुत्पादानुरोधेन तादृशघटत्वाभावव्याप्यवत्तानिश्चयत्वेन द्वितीया प्रतिबन्धकता। न च 'घटत्वाभावव्याप्यवान् अभाव इति निश्चये सति तादृशघटत्ववत्ताबुद्धेः अनुदयात्

घटत्वाभावव्याप्यवत्तानिश्चयत्वेन तृतीयाऽपि प्रतिबन्धकता आवश्यकीति वाच्यम् । घटत्वाभावव्याप्यवत्तानिश्चयत्वेन अतिरिक्तप्रतिबन्धकताया आवश्यकत्वेऽपि तस्याः निरुक्तसत्प्रतिपक्षनिश्चयसाधारण्याऽसम्भवात् । 'पटकालीनघटत्वाभावव्याप्यवान् अभावः इति निश्चयस्य घटत्वे पटकालीनत्वमवगाहमानस्य निरुक्तसाध्यवत्ताबुद्धि-प्रतिबन्धकताविरहेण शुद्धघटत्वत्वावच्छिन्नविषयताया एव निरुक्तप्रतिबन्धकतावच्छेदक-कोटौ निवेश्यतया निरुक्तसत्प्रतिपक्षनिश्चयस्य तादृशावच्छेदकरूपानाक्रान्तत्वात् ।

इत्थञ्च प्रयोजकताद्वयस्यापि आवश्यकतया तादृशघटत्वाभावाभाववदवृत्ति-मदभावविषयित्वीयप्रयोजकताके अभावधर्मिकतादृशघटत्ववैशिष्ट्यावगाहित्वाभावे तदधिकरणत्वे च विशिष्टान्तरभूतस्य घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावस्य विषयितायाः व्यापकतावच्छेदकरूपेण साक्षादेव प्रयोजकतावत्त्वेऽपि, तस्याः प्रयोजकतायाः निरुक्तान्यतरसम्बन्धेन तादृशघटत्वाभावव्याप्यवदभावविषयित्वीय-प्रयोजकताविशिष्टत्वाभावात् लक्षणघटकत्वं नास्ति । अपि तु, घटत्वव्यापकघटत्व-वद्भेदविषयितादिनिष्ठायाः घटत्ववद्भेदधर्मिकघटत्वाव्यापकत्व वैशिष्ट्यावगाहित्वाभावा-दिनिरूपितप्रयोजकताया एव । तत्र हि स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगिता-वच्छेदकत्वसम्बन्धेन निरुक्तसत्प्रतिपक्षविषयित्वीयप्रयोजकतावैशिष्ट्यं प्रसिद्ध्यति। तदनिरूपकत्वस्य अभावधर्मिकतादृशघटत्ववैशिष्ट्यावगाहित्वाभावे सत्वात् समन्वयः।

एवम्, अभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वाभावा-भाववदवृत्तिमद्घटे नाऽव्याप्तिः । तद्विषयिताप्रयोज्ये पक्षधर्मिकसाध्यवैशिष्ट्या-वगहित्वाभावे अभावविशिष्टव्यापकसामान्यत्वाभावकालीनाभाव-विशिष्टवद्घटविषयितायाः व्यापकतावच्छेदकरूपेण प्रयोजकतावत्त्वेऽपि[1] अव्यापक-विषयिताशून्यज्ञानीयत्वाभावेन, तदीयप्रयोजकतायाः अन्यतरसम्बन्धेन निरुक्त-सत्प्रतिपक्षविषयित्वीयप्रयोजकताविशिष्टत्वाभावेन च लक्षणघटकत्वाभावात् । अभावव्यापकगगनाभाववदभाववत्कालीनगगनाभावसमानाधिकरणाऽभाववद्घटे

---

1. अभावविशिष्टेत्यादिसत्प्रतिपक्षविषयकनिश्चये प्रतिबन्धकताद्वयस्य, तद्विषयितायां प्रयोजकताद्वयस्यानिवार्यत्वं ५०तमकोटिव्याख्याने उपपादितम् ।

नाऽव्याप्तिः । तन्निश्चयेऽपि प्रतिबन्धकताद्वय[1] सत्वेन विशिष्टान्तरभूतगगनाभाव-वदभाववत्कालीनगगनाभावसमानाधिकरणगगनाभाववद्घटविषयित्वीयप्रयोजकतायाः गगनाभावप्रकारकनिश्चयवैशिष्ट्यगतसमुदायत्वावच्छिन्नायाः निरुक्तसत्प्रतिपक्ष-विषयित्वीयाभावव्यापकताप्रकारकनिश्चयवैशिष्ट्यगतसमुदायत्वावच्छिन्नप्रयोजकता-विशिष्टत्वाभावेन लक्षणघटकत्वाभावात् ।

एवं, जलं वृत्तित्वाभाववदित्यत्र; वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र च बाधविषयित्वीयप्रयोजकतायां बाधघटितसत्प्रतिपक्षविषयित्वीयप्रयोजकता-वैशिष्ट्यस्य विरहेण बाधविषयित्वीयप्रयोजकतायाः लक्षणघटकत्वाभावात् न तामादायाऽव्याप्तिः ।

ह्रदो वह्निमानित्यत्र जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रद-विषयिताप्रयोज्ये ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावे जलवद्ध्रदात्मकविशिष्टान्तर-विषयितानिष्ठप्रयोजकतायाः निरुक्तसत्प्रतिपक्षविषयित्वीयप्रयोजकतात्मिकायाः जलवद्ध्रदविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वविरहेण; वह्निधूमोभय-साध्यके जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकधूमाभावसमानाधिकरण-जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयिताप्रयोज्ये धूमवैशिष्ट्यावगाहि-त्वाभावे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदात्मकविशिष्टान्तरविषयिता-निष्ठप्रयोजकतायाः निरुक्तमहासत्प्रतिपक्षविषयित्वीयप्रयोजकतात्मिकायाः जलव्यापक-वह्न्यभावसमानाधिकरणजलवद्ध्रदविषयितात्वावच्छिन्नव्यापकतावच्छेदक-रूपावच्छिन्नत्वविरहेण लक्षणाऽघटकत्वात्, प्रयोजकतान्तरमादाय तत्र तत्र सत्प्रतिपक्षे समन्वयः । वह्निजलाभावोभयसाध्यके तु जलव्यापकवह्निजलाभावोभयाभाव-समानाधिकरणजलवद्ध्रदविषयितया साक्षात्प्रयोज्ये निरुक्तोभयवैशिष्ट्या-वगाहित्वाभावे जलवद्ध्रदात्मकविशिष्टान्तरविषयितायाः व्यापकतावच्छेदकरूपेण प्रयोजकतायाः सत्प्रतिपक्षविषयित्वीयप्रयोजकताविशिष्टत्वेन लक्षणघटकतायाः अक्षतत्वेऽपि तत्साक्षात्प्रयोज्यत्वस्य निरुक्तोभयवैशिष्ट्यावगाहित्वाभावे विरहात् बाधघटिते तत्र सत्प्रतिपक्षे समन्वयः ।

---

1. ५० तमकोटिव्याख्याने व्यवस्थापितम् । तद्विषयितायां प्रयोजकताद्वय-स्यावश्यकत्वात् ।

उभयवद्ध्रदादिषु नातिव्याप्तिः । साक्षादेववह्न्यभाववह्न्यभावव्याप्य-व्याप्योभयवद्ध्रदविषयिताप्रयोज्ये ह्रदधर्मिकवह्निवैशिष्ट्यावगाहित्वाभावे वह्न्यभाववद्ध्रदात्मकविशिष्टान्तरविषयितायाः, जलव्यापकवह्न्यभाव-कालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदविषयिताप्रयोज्ये ह्रदधर्मिक-वह्निवैशिष्ट्यावगाहित्वाभावे जलव्यापकवह्न्यभावकालीनजलवद्ध्रदा-त्मकविशिष्टान्तरविषयितायाः, पृथिवीत्वव्यापकसामान्यत्वाभावकालीन-पृथिवीत्वसामान्यत्वाभावव्याप्यव्याप्योभयवद्घटविषयिताप्रयोज्ये घटधर्मिका-ऽभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्ववैशिष्ट्यावगाहित्वाभावे पृथिवीत्वव्यापकसामान्यत्वाभावकालीनपृथिवीत्ववद्घटात्मकविशिष्टान्तरविषयितायाः साक्षादेव प्रयोजकतावत्त्वात् । तत्तद्विशिष्टान्तरविषयित्वीयप्रयोजकतायां तत्तदुभयाभाववत्पक्षविषयित्वीयप्रयोजकतायाः वैशिष्ट्यस्य निरुक्तान्यतरान्तर्गत-स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन अक्षततया तत्तद्विशिष्टान्तरविषयित्वीय-प्रयोजकतायाः लक्षणघटकत्वाच्च ।

बाधघटितसत्प्रतिपक्षोन्नायके नातिव्याप्तिः । जलव्यापकवृत्तित्वव्याप्य-समानाधिकरणजलवज्जलविषयितायाः तद्व्यक्तिव्यापकतादात्म्यसम्बन्धा-वच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्तद्व्यक्ति-मद्वृत्तित्वविषयितायाश्च बाधविषयिताद्यनात्मिकायाः प्रकृतपक्षसाध्यवैशिष्ट्या-वगाहित्वाभावं प्रति प्रयोजकताविरहात् । बाधविषयितात्मिकायाः वह्न्यभाव-व्यापकेत्यादिरूपोन्नायकविषयितायाः तादृशाभावं प्रति प्रयोजकतावत्त्वेऽपि तत्र बाधविषयितात्मकविशिष्टान्तरविषयितायाः प्रयोजकतावत्वात् ।

इदमत्रावधेयम् । विशिष्टान्तराऽघटितत्वशरीरे स्वावच्छिन्नविषयितानिष्ठ- प्रयोजकतायां विशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपानवच्छिन्नत्वमेव निवेशयितुमुचितम्, लाघवात् । तथाहि । तथासति, विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां निरुक्तोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वम् निरुक्तान्यतरसम्बन्धेन प्रयोजकता-विशिष्टत्वं वा न निवेशनीयम् । सत्प्रतिपक्षघटकबाधविषयितानिष्ठप्रयोजकतायाः लक्षणघटकत्वेऽपि तत्राव्याप्तिविरहात् । बाधघटितसत्प्रतिपक्षविषयित्वीयप्रयोजकता-वच्छेदकसमुदायत्वस्य बाधविषयितात्मकविशिष्टान्तरविषयितात्वावच्छिन्नव्यापक-तावच्छेदकत्वाभावात् । एवं, साक्षात्प्रयोजकतानिरूपितत्वं न निवेशनीयम् । ह्रदो

वह्निजलाभावोभयवानित्यत्र जलव्यापकनिरुक्तोभयाभावसमानाधिकरण-जलवद्ध्रदविषयित्वीयप्रयोजकतावच्छेदकसमुदायत्वस्य जलवद्ध्रद-विषयितात्मकविशिष्टान्तरविषयिताव्यापकतावच्छेदकत्वविरहेण निरुक्तसत्प्रति-पक्षेऽव्याप्तिविरहात् । मेयत्वविशिष्टजलव्यापकवह्न्यभावसमानाधिकरण-जलवद्ध्रदविषयितानिष्ठप्रयोजकतावच्छेदकसमुदायत्वस्य जलव्यापकवह्न्य-भावसमानाधिकरणजलवद्ध्रदविषयितात्मकविशिष्टान्तरविषयिताव्यापकता- वच्छेदकतया मेयत्वविशिष्टजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदेऽतिव्याप्तिविरहाच्च ।

ह्रदो वह्निमानित्यत्र निरुक्तोभयवद्ध्रदयोर्नातिव्याप्तिः । वह्न्यभाव-वह्न्यभाव्याप्यव्याप्योभयवद्ध्रदविषयित्वीयप्रयोजकतावच्छेदकसमुदायत्वस्य वह्न्यभाववद्ध्रदविषयिताव्यापकतावच्छेदकत्वात् ,जलव्यापकवह्न्यभाव-कालीनजलवद्ध्रदघटितोभयवद्ध्रदविषयित्वीयप्रयोजकतावच्छेदकसमुदायत्वस्य जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयिताव्यापकतावच्छेदकत्वात् । अथैवमपि ह्रदो जलाभाववानित्यत्र समानाधिकरणजल व्यावद्ध्रदादौ अव्याप्तिः। तद्विषयितानिष्ठप्रयोजकतावच्छेदकसमुदायत्वस्य जलव्याप्यवद्ध्रदविषयिता-त्मकविशिष्टान्तरविषयिताव्यापकतावच्छेदकत्वात् । सामान्याभाववत्ताबुद्धौ विशेषवत्तानिश्चयानां सामान्यवत्तानिश्चयसाधारणरूपेणेव विशेषव्याप्यवत्तानिश्चयानां सामान्यव्याप्यवत्तानिश्चयसाधारणरूपेण प्रतिबन्धकतया, तद्विषयितानां प्रयोजक-तैक्यादिति चेत् ।

न। अननुगताऽप्रामाण्यज्ञानानामुत्तेजकत्वानुरोधेन प्रतिबन्धताभेदस्य अनिवार्यतया प्रयोजकताभेदस्याऽवश्यकत्वात् । प्रतिबन्धकतैक्यस्य प्रामाणिकत्वे तु, स्वघटकसत्प्रतिपक्षीयविरोधिताऽतिरिक्तविरोधिताशून्यत्वेन मेयत्वविशिष्ट-सत्प्रतिपक्षसमशीलानामेषां समानाधिकरणजलव्याप्यवद्ध्रदादीनामलक्षताया एवोपगन्तव्यत्वादिति दिक् ।

*********************

# ॥ शतकोटिकुल्या ॥

शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिविरचिता ।

ह्रदो वह्निमानित्यत्र वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिः अवश्यनिवेशनीयप्रतिबन्धकताघटितविशिष्टान्तराघटितत्त्वविशेषणेनैव वार्यत इत्युक्ते बाधघटितसत्प्रतिपक्षे अव्याप्तिः सम्भवति इत्युक्तं शतकोटिग्रन्थे ।

१. अथात्र बाधघटितसत्प्रतिपक्षेऽव्याप्तिवारणार्थं स्वावच्छिन्नविषयकत्त्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तदवच्छिन्नत्त्वरूपविशिष्टान्तराघटितत्त्वं निवेश्यते ।

न च सत्यन्तदळवैयर्थ्यमिति शंक्यम् । सत्यन्तदळघटितस्यैव परिष्कारात् । तथा च स्वपदेन बाधघटितसत्प्रतिपक्षत्वस्य परिग्रहे, स्वावच्छिन्नविषयकत्त्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं न बाधविषयित्वं, किन्तु बाधघटितसत्प्रतिपक्षविषयित्त्वमेवेति न तत्राव्याप्तिः ॥

---

विवेचनी

१) स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वमिति ।

अत्र प्रथममवच्छेदकत्वं स्वावच्छिन्नविषयकत्वे अनतिरिक्तवृत्तित्वरूपमेव । अन्यथा सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः । तन्निश्चयीयायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः लक्षणघटकत्वात्, तदनतिरिक्तवृत्तौ वह्न्यभावव्याप्यव्याप्यव्यापकवह्न्यभावकालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रदादिविषयितायां वह्न्यभावव्याप्यव्याप्यवद्ध्रदत्वाद्यवच्छिन्नाऽनिरूपितत्वस्य विरहात्। द्वितीयमवच्छेदकत्वम् । यत्किञ्चिद्विषयितायाम् अनतिरिक्तवृत्तित्वरूपमेव । अन्यथा, प्रतिहेतुव्यापकसाध्याभावविषयितायाः

२. न चैवं ह्रदो वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयवानित्यत्र वह्न्यभावव्याप्यव्याप्यवद्ध्रदेऽतिव्याप्तिः । वह्न्यभावव्याप्यव्याप्यवद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यं बाधप्रतिबन्धकतासामान्यमेव । तदवच्छेदकविषयित्वं तादृशह्रदत्वावच्छिन्नविषयकत्वमेव । तच्च, घटत्वादि धर्मावच्छिन्नानिरूपितमिति तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रकृतानुमितिविरोध्यनुमितिजनकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य च तादृशह्रदत्वे सत्त्वादिति वाच्यम् ॥

३. प्रकृतानुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धक तावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतायद्रूपावच्छिन्नाविषयिताव्यापिका तद्रूपावच्छिन्नत्वे सति, स्वावच्छिन्नविषयकत्वावच्छिन्नतद्रूपावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतासामान्यावच्छेदकीभूतं यत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमिति विवक्षया नोक्तदोषः ।

अस्य चायमनुगमः । धर्मविशिष्टधर्मवत्त्वम् । वैशिष्ट्यं स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वतादात्म्यैतदुभयसम्बन्धेन ।

---

विवेचनी

तथाविधयत्किञ्चिद्विषयितापदेन ग्रहणसम्भवात् व्यापकताघटितसत्प्रतिपक्षमात्रे अव्याप्तिः ।

३. विषयितायां स्ववैशिष्ट्यं स्वसमानेत्यादिभेदवत्वसम्बन्धेन । स्वाधिकरणत्वं च स्वविशिष्टप्रतिबद्ध्यतात्वसम्बन्धेनेति ।

स्वाधिकरणत्वं स्वविशिष्टप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतात्वसम्बन्धेनेत्यर्थः। अन्यथा बाधघटितसत्प्रतिपक्षेऽव्याप्तितादवस्थ्यम् । जलव्यापक समानाधिकरणजलसमानाधिकरणजलवद्ध्रदत्ववैशिष्ट्यस्य समानाधिकरण जलवद्ध्रदरूपबाधविषयितायां सत्वेन तस्याः लक्षणघटकत्वापातात् । इत्थं च भेदप्रतियोगितावच्छेदकत्वं न स्वनिरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन, अपि तु स्वरूपसम्बन्धेन ।

प्रतीतौ स्ववैशिष्ट्यं च स्वविशिष्टधर्मावच्छिन्नविषयितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

धर्मे स्ववैशिष्ट्यं च स्वविशिष्टविषयितावृत्तित्वसम्बन्धेन । विषयितावृत्तित्वञ्च स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । विषयितायां स्ववैशिष्ट्यं च स्वसमानेत्यादिभेदवत्वसम्बन्धेन । स्वाधिकरणत्वं च स्वविशिष्टप्रतिबद्ध्यतात्त्वसम्बन्धेन ॥

प्रतिबद्ध्यतायां स्ववैशिष्ट्यं च स्वसमानेत्यादिभेदवत्त्वसम्बन्धेन। स्वाधिकरणत्त्वं च स्वावच्छिन्नविषयिताशालिनिश्चयत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्त्वं च स्वनिरूपितप्रतिबन्धकतावत्त्वस्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्त्वावच्छिन्नानुमिति निष्ठजन्यतानिरूपितजनकतावत्त्वोभयसम्बन्धेन । महाभेदप्रतियोगितावच्छेदकत्त्वञ्च स्वसमानेत्यादिभेदवत्त्वसम्बन्धेन । तत्र स्वाधिकरणत्त्वं स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयिताशालिनिश्चयत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्त्वं च स्वनिरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन ॥

४. न च बाधविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिरिति वाच्यम् ॥

५. बाधविशिष्टसत्प्रतिपक्षत्त्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्त्वं सत्प्रतिपक्षविशिष्टबाधविषयित्त्वमपि भवति । तच्च बाधविशिष्टसत्प्रतिपक्षानिरूपितमेवेति अतिव्याप्तिविरहात् ॥

---

## विवेचनी

४. बाधविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिरिति ।

ननु ह्रदो वह्निमान् इत्यत्र वह्न्यभावव्याप्यवद्ध्रदस्य वह्न्यभाववद्ध्रदविशिष्टत्वाभावात् बाधविशिष्टसत्प्रतिपक्षाऽप्रसिद्धिः इति चेत् । न । वह्न्यभावव्याप्यवद्ध्रदः ह्रदवृत्तिवह्न्यभाववान् इत्याकारकज्ञानविषयस्य

६. न चैवं सति व्यापकताघटितसत्प्रतिपक्षे अव्याप्तिवारणार्थं यत्किञ्चिद्विषयित्वे स्वावच्छिन्नविषयकत्वाव्यापकविषयिता-शून्यज्ञानीयत्वस्यावश्यं निवेशनीयतयासत्प्रतिपक्षविशिष्टबाधविषयित्वं न यत्किञ्चिद्विषयित्वपदेन धर्तुं शक्यते, किन्तु बाधविशिष्टसत्प्रतिपक्ष-विषयित्वमेवेति न बाधविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिवारणं सम्भवतीति वाच्यम् ॥

७. यत्किञ्चिद्विषयित्वे स्वावच्छिन्नविषयकत्वाऽव्यापकविषयिता-शून्यज्ञानीयत्वनिवेशेऽपि व्यापकताघटितसत्प्रतिपक्षेऽव्याप्तिवारणं न सम्भवति । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्न-

---

विवेचनी

ह्रदवृत्तिवह्न्यभावविशिष्टस्य वह्न्यभावव्याप्यवद्ध्रदस्यैव प्रसिद्धत्वात् । अग्रिमकोटौ च वह्न्यभावव्याप्यवद्ध्रदे ह्रदवृत्ति वह्न्यभावः इतिज्ञानीयविषयतावच्छेदकावच्छिन्न-वह्न्यभावव्याप्यवद्ध्रदविशिष्टं ह्रदवृत्तिवह्न्यभावमादाय अतिव्याप्तिवारणं विवक्षितम्।

अथवा कालिकसम्बन्धेन वह्न्यभाववद्ध्रदविशिष्टे वह्न्यभाव व्याप्यवद्ध्रदे अतिव्याप्तिः, तेनैव सम्बन्धेन वह्न्यभावव्याप्यवद्ध्रदविशिष्टं वह्न्यभाववद्ध्रदमादाय अतिव्याप्तिवारणं च विवक्षितमित्यदोषः ।

६. व्यापकताघटितसत्प्रतिपक्षेऽव्याप्तिवारणार्थमिति ।

जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नविषयक-त्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतायां जलव्यापकवह्न्यभाव-कालीनजलवद्ध्रदविषयितायां जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वा-वच्छिन्नाऽनिरूपितत्वस्य सत्वेन, यादृशयादृशधर्मपदेन जलव्यापकवह्न्यभावसमाना-धिकरणजलवद्ध्रदत्वस्य धर्तुं शक्यत्वात् तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदक-त्वस्य तत्र विरहादिति भावः ।

७. स्वावच्छिन्नविषयिताव्यापकप्रकृतानुमितिविरोध्यनुमितिजनकताशालि ज्ञानीयत्वमिति ॥

स्वावच्छिन्नविषयिताव्यापिका या प्रकृतानुमितिविरोध्यनुमितिजनकता-तदवच्छेदकत्वमित्यर्थः । यथाश्रुते तु नोक्ताऽव्याप्तिवारणसम्भवः । जलव्यापकवह्न्य-

विषयकत्त्वावच्छिन्नप्रतिबन्धकतासामान्याऽवच्छेदकत्त्वस्य जलव्यापक-वह्न्यभावाधिकरणनिरूपितवज्जलवद्ध्रदत्त्वावच्छिन्नविषयित्त्वे सत्त्वात्। तस्य च स्वावच्छिन्न विषयकत्त्वाव्यापकविषयिताशून्यज्ञानीयत्त्वाच्च। अतः स्वावच्छिन्नविषयि ताव्यापकप्रकृतानुमितिविरोध्यनुमितिजनकता-शालिज्ञानीयत्त्वमेव यत्किञ्चिद्विषयित्त्वे निवेशनीयम्। तथा च स्वावच्छिन्नविषयकत्त्वाव्यापकविषयताशून्यज्ञानीयत्त्वस्य यत्किञ्चिद्वि-षयित्त्वे अनिवेशेऽपि व्यापकताघटितसत्प्रतिपक्षे जलव्यापकवह्न्यभाव-समानकालीनजलवद्ध्रदत्त्वावच्छिन्नविषयित्त्वमादायाव्याप्तिवारणं सम्भवत्येवेति बाधविशिष्टसत्प्रतिपक्षे तन्निवेशप्रयुक्तातिव्याप्तेरभावात्॥

---

## विवेचनी

भावाधिकरणनिरूपितवज्जलवद्ध्रदविषयितायां तादृशविरोध्यनुमितिजनकतासामाना-धिकरण्यस्य समूहालम्बनज्ञानाऽन्तर्भावेण अक्षतत्वात्। अवच्छेदकत्वञ्च अनतिरिक्त-वृत्तित्वरूपमेव। अतः सत्प्रति पक्षविशिष्टबाधविषयितायाः तादृशजनकतावच्छेदक-तावत्त्वेन लक्षण घटकत्वसम्भवात् बाधविशिष्टसत्प्रतिपक्षे नाऽतिव्याप्तिः।

नन्वत्र अनुमितिजनकतावच्छेदकत्वस्य तादृशस्य विवक्षणेनैव निरुक्तविषयिता-वारणेन व्यापकताघटितसत्प्रतिपक्षस्य सङ्ग्रहसम्भवात्, प्रकृतानुमितिविरोधित्वं स्वावच्छिन्नविषयिताव्यापकत्वं च विशेषणं व्यर्थमिति चेत्।

न। ह्रदो धूमवानित्यत्र वह्न्यभावव्याप्यव्यापकधूमाभावसमानाधि-करणवह्न्यभावव्याप्यवद्ध्रदे अव्याप्तिवारकतया प्रकृतानुमितिविरोधित्वदल-सार्थक्यात्। अन्यथा, वह्न्यभावव्याप्यव्यापकधूमाभावकालीनवह्न्यभाव-व्याप्यवद्ध्रदविषयितायां यत्किञ्चिदनुमितिनिरूपितनिरुक्तसत्प्रतिपक्षविषयि-ताव्यापकजनकतावच्छेदकतायाः सत्वेन कालीनत्वादिघटितनिरुक्तविशिष्ट विषयितायाः लक्षणघटकत्वापातात्।

ह्रदो वह्निमानित्यत्र जलव्यापकवह्न्यभावकालीनवह्न्यभावव्याप्य-वद्ध्रदकालीनजलवद्ध्रदविषयितामादाय जलव्यापकवह्न्यभावसमानाधि-करणजलवद्ध्रदे अव्याप्तिवारणाय च स्वावच्छिन्नविषयिताव्यापकतानिवेशस्य आवश्यकत्वात्। निरुक्तसत्प्रतिपक्षविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेद-

८. न च स्वावच्छिन्नविषयिताव्यापकविरोध्यनुमितिजनकताशालि-ज्ञानीयत्वस्य यत्किञ्चिद्विषयित्वे निवेशे, ह्रदो वह्निमानित्यत्र वह्न्यभाव-व्याप्यव्याप्यस्य प्रतिहेतुत्वे सत्प्रतिपक्षेऽव्याप्तिः । तत्र, वह्न्यभावव्याप्य व्याप्यव्यापकवह्न्यभावसमानकालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रद-त्वावच्छिन्न विषयित्वस्य तादृशस्य सत्त्वादिति वाच्यम् ॥

९. यत्किञ्चिद्विषयितायां जनकताविशिष्टान्यज्ञानीयत्वमेव निवेश्यते। वैशिष्ट्यं स्वव्यापकप्रतिबन्धकतावत्त्वस्वशून्यत्वोभयसम्बन्धेन । तथा च वह्न्यभावव्याप्यव्याप्यव्यापकवह्न्यभावसमानकालीनवह्न्यभाव-व्याप्यव्याप्यवद्ध्रदत्वावच्छिन्नविषयितायां स्वव्यापकप्रतिबन्धकता-वत्त्वस्वशून्यत्वोभयसम्बन्धेन वह्न्यभावनुमितिजनकताविशिष्टज्ञानीय-त्वस्यैव सत्त्वेन विशिष्टान्यज्ञानीयत्त्वाभावेन नाव्याप्तिः ॥

---

## विवेचनी

कीभूता या जलव्यापकवह्न्यभावकालीनवह्न्यभावव्याप्यवद्ध्रदकालीनजल-वद्ध्रदविषयिता, तत्र ह्रदो वह्न्यभावव्याप्यवान् इति निश्चयीयप्रकृतानुमितिविरोध्यनु-मितिनिरूपितजनकताऽनतिरिक्तवृत्तित्वस्य जलव्यापकवह्न्यभावसमानाधिकरण-जलवद्ध्रदत्वावच्छिन्नाऽनिरूपितत्वस्य च सत्त्वात् ।

बाधविशिष्टसत्प्रतिपक्षे तन्निवेशनप्रयुक्तातिव्याप्तेरभावादिति ।

नन्वेवमपि उभयवद्ध्रदातिव्याप्तितादवस्थ्यम् । वह्न्यभाववद्ध्रदविषयितायाः उभयवद्ध्रदत्वावच्छिन्नविषयिताव्यापकविरोध्यनुमितिजनकतावच्छेदकत्वाभावेन लक्षणघटकत्वाऽसम्भवादिति चेत् । न । वह्न्यभावव्याप्यव्याप्यवद्ध्रदकालीनवह्न्य-भाव वद्ध्रदविषयितायाः तथात्वेन लक्षण घटकतया तामादायैव उभयवद्ध्रदातिव्याप्तेः वारणात् ।

९) जनकताविशिष्टान्यज्ञानीयत्वमेव निवेश्यत इति ।

नन्वेवं निवेशे व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तितादवस्थ्यम् । जलव्यापकवह्न्यभावकालीनजलवान् ह्रदः इत्याकारकनिश्चयस्य सत्प्रति पक्षाऽनवगाहिनः निरुक्तोभयसम्बन्धेन वह्न्यभावानुमितिजनकताविशिष्टत्वेऽपि ह्रदो जलव्यापकवह्न्यभावकालीनजलवान् जलव्यापकवह्न्यभावसमानाधिकरणजलवांश्च

इत्याकारकसमूहालम्बनस्य जनकताविशिष्टान्यत्वेन, तद्वृत्ति तायाः जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितायाम् अक्षतत्वात् । जनकताविशिष्टान्यज्ञानीयत्वेन जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयितायाः ग्रहणसम्भवात् इति चेत् ।

न । निरुक्तोभयसम्बन्धेन जनकताविशिष्टज्ञानाऽवृत्तित्वस्यैव यत्किञ्चिद्विषयितायां विवक्षितत्वात् । समानाकारकज्ञानेषु विषयिताभेदस्य अप्रामाणिकतयानिरुक्तसमूहालम्बनज्ञानीयकालीनत्वघटितविशिष्टविषयितायाः जलव्यापकवह्न्यभावकालीनजलवान् ह्रदः इत्याकारकज्ञानसाधारण्यात्, तस्य च ज्ञानस्य निरुक्तोभयसम्बन्धेन सत्प्रतिपक्षनिश्चयीयजनकताविशिष्टत्वात् ।

अथैवमपि जलव्यापकवह्न्यभावकालीनजलजलव्यापकवह्न्यभावसमानाधिकरणजलोभयवान् ह्रदः इति ज्ञानीयायाः जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदः जलव्यापकवह्न्यभावकालीनजलवद्ध्रद कालीनः इतिज्ञानीयायाश्च कालीनत्वघटितविशिष्टविषयितायाः जनकताविशिष्टज्ञानाऽवृत्तितया लक्षणघटकतायाः आवश्यकत्वात् अव्याप्तिः तदवस्थैव इति चेत् ।

न । यत्किञ्चिद्विषयितायाः मुख्यविशेष्यितात्वेन निवेशनीयतया सर्वसामञ्जस्यात् । तथाहि । निरुक्तोभयत्वावच्छिन्नावगाहिज्ञानीयायाः कालीनत्वघटितविशिष्टविषयितायाः मुख्यविशेष्यतात्मकतया लक्षणघटकत्वेऽपि, तस्याः सत्प्रतिपक्षविषयितात्मकत्वेन तत्र जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नाऽनिरूपितत्वस्य विरहात् न तामादायाऽव्याप्तिप्रसक्तिः । सत्प्रतिपक्षविशेषणतया कालीनत्वघटितविशिष्टावगाह्युपदर्शितज्ञानीयायाः विषयितायास्तु मुख्यविशेष्यिताऽनात्मकत्वेन लक्षणाऽघटकतया न तामादायाऽव्याप्तिप्रसंगः ।

न च तथापि सत्प्रतिपक्षविशेष्यतया कालीनत्वघटितविशिष्टवगाहिज्ञानीय[1] विषयितायाः मुख्यविशेष्यितात्मकत्वेन लक्षणघटकतया तामादाय दोषो दुर्वार इति वाच्यम् ।

तस्याः लक्षणघटकत्वेऽपि तत्र जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वाद्यवच्छिन्नाऽनिरूपितत्वस्य विरहेण अदोषात् ।

---

1. जलव्यापकवह्न्यभावकालीनजलवद्ध्रदः जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदकालीन इति ज्ञानीयेत्यर्थः ।

१०. न चैवं ह्रदो वह्निधूमोभयवानित्यत्र जलव्यापकवह्न्यभाव-समानाधिकरणजलवद्ध्रदे अव्याप्तिः । तादृशजलवद्ध्रदत्वावच्छिन्न-विषयितायां जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापक-धूमाभावसमानाधिकरणजलव्यापकवह्न्यभावसमानाधिकरणजल-वद्ध्रदविषयकनिश्चयनिष्ठधूमाभावानुमितिजनकताविशिष्टज्ञानीयत्वस्यैव सत्त्वेन तादृशजनकताविशिष्टान्यज्ञानीयविषयित्वाप्रसिद्धेरिति वाच्यम्।।

---

विवेचनी

उभयवद्ध्रदे नातिव्याप्तिः । वह्न्यभाववद्ध्रदविषयितायाः जनकता-विशिष्टज्ञानाऽवृत्तितया लक्षणघटकत्वसम्भवात् । वह्न्यभाववद्ध्रद विषयितावतो वह्न्यभाववद्ध्रदमात्रावगाहिज्ञानस्य वह्न्यभाववद्ध्रदसत्प्रतिपक्षोभयावगाहि-समूहालम्बनस्य च जनकताविशिष्टत्वाभावेन लक्षणाऽघटकत्वात् । कालीनत्वघटितविशिष्टमात्रावगाहिज्ञानस्यैव तादृशत्वेन लक्षणघटकत्वात् तदवृत्तित्वस्य वह्न्यभाववद्ध्रदविषयितायाम् अक्षतत्वात् ।

इत्थं च जनकतावैशिष्ट्यघटकतया स्वव्यापकप्रतिबन्धकतावत्त्वस्याऽनिवेशे उभयवद्ध्रदेऽतिव्याप्तिः; स्वशून्यत्वसम्बन्धेन जनकताविशिष्टतायाः वह्न्यभाव-वद्ध्रदज्ञाने विद्यमानतया तदीयवह्न्यभाववद्ध्रदविषयितायाः जनकताविशिष्ट-ज्ञानवृत्तितया लक्षणाऽघटकत्वात् ।

न च तदनिवेशे उभयवद्ध्रदे नातिव्याप्ति प्रसक्तिः । तथासति निरुक्तवह्न्यभाव-वद्ध्रदविषयितायाः लक्षणाऽघटकत्वेऽपि वह्न्यभावव्याप्य व्याप्यवद्ध्रदकालीन-वह्न्यभाववद्ध्रदविषयितायाः अनुमितिजनकताशालि ज्ञानीयतया, स्वशून्यत्वसम्बन्धेन जनकताविशिष्टज्ञानाऽवृत्तित्वेन उभयवद्ध्रद त्वावच्छिन्नाऽनिरूपितत्वेन च तामादाय अतिव्याप्तेः वारणादिति वाच्यम् ।

सत्प्रतिपक्षनिश्चयीयजनकतायाः स्वशून्यत्वसम्बन्धेन वैशिष्ट्यस्य वह्न्यभाव-व्याप्यव्याप्यवद्ध्रदकालीनवन्ह्यभाववद्ध्रदज्ञाने अक्षततया तदीय निरुक्तविषयितायाः जनकताविशिष्टज्ञानवृत्तितया लक्षणघटकत्वाऽसम्भवात् ।

११. जनकतायां स्वावच्छिन्नविषयिताव्यापकत्वस्यापि निवेशनीयत्वात्। तथा च धूमाभावानुमितिजनकतायाः स्वावच्छिन्नविषयिताव्यापकत्वाभावेन नोक्तदोषः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्येत्यादिसमस्तबिरुदावलीविराजितश्रीजगद्गुरुसार्वभौमश्रीशृङ्गेरी श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिविरचिता शतकोटिकुल्या समाप्तिमगमत् ॥

---

## विवेचनी

अत्रेदं चिन्त्यते । स्वव्यापकप्रतिबन्धकतावच्छेदकत्वदलस्य परित्यागे सति उभयवद्ध्रदविषयिताया अपि लक्षणघटकत्वं न सम्भवति। तस्याः सत्प्रतिपक्षनिश्चयीयजनकताशून्यज्ञानवृत्तित्वेन जनकताविशिष्टज्ञानाऽवृत्तित्वाऽसम्भवात् । तथा च तादृशविषयित्वाऽप्रसिद्ध्यैव नातिव्याप्तिः । तथापि वक्ष्यमाणरीत्या परिष्कृतस्य अस्य दलस्य उभयवद्ध्रदातिव्याप्तिवारकतया सार्थक्यं सम्भविष्यतीति ।

स्वशून्यत्वाऽप्रवेशे असम्भवः । सत्प्रतिपक्षनिश्चयसामान्यस्य स्वव्यापकप्रतिबन्धकतावत्त्वसम्बन्धेन जनकताविशिष्टतया सर्वस्या अपि सत्प्रतिपक्षविषयितायाः जनकताविशिष्टज्ञानवृत्तितया तदवृत्तिनिरुक्तयत्किञ्चिद्विषयित्वाऽप्रसिद्धेः ।

११. जनकतायां स्वावच्छिन्नविषयिताव्यापकत्वस्यापि निवेशनीयत्वादिति ।

अथैवं सति स्वव्यापकप्रतिबन्धकतावत्त्वस्य जनकतावैशिष्ट्यघटकतया निवेशनमफलम् । तदनिवेशे उभयवद्ध्रदातिव्याप्तेरप्रसक्तेः । तथासति, वह्न्यभावव्याप्यव्याप्यवद्ध्रदकालीनवह्न्यभाववद्ध्रदविषयितायाः उभयवध्रद विषयिताव्यापकजनकताविशिष्टज्ञानावृत्तित्वेन लक्षणघटकत्वात् । तस्याः विषयितायाः वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदत्वावच्छिन्नविषयिताव्यापकजनकताशून्ये क्वचिदपि ज्ञाने अवृत्तेः । तत्र च विषयितायां उभयवद्ध्रदत्वावच्छिन्नाऽनिरूपितत्वस्य अक्षतत्वाच्च इति चेत् ।

अत्रोच्यते । वह्न्यभावव्याप्यवद्ध्रदविषयिताव्यापकजनकतायाः निरुक्तोभयसम्बन्धेन वैशिष्ट्यस्य अप्रसिद्ध्या वह्न्यभावव्याप्यवद्ध्रदादौ अव्याप्तेः वारणाय

किञ्चिद्रूपावच्छिन्नविषयितायां[1] स्वावच्छिन्नविषयिताव्यापकजनकतायाः स्वव्यापक-प्रतिबन्धकतावच्छेदकत्वस्वानवच्छेदकत्वोभयाभावसम्बन्धेन वैशिष्ट्यमेव विवक्षणीयम्। वह्न्यभावव्याप्यवद्ध्रदविषयिताव्यापकजनकतायाः निरुक्तोभयाभाववत्त्वसम्बन्धेन वैशिष्ट्यस्य तस्यामेव विषयितायां प्रसिद्धत्वात् नोक्ताऽव्याप्तिः अवच्छेदकत्वं च स्वरूपसम्बन्धरूपं, लाघवात् बाधकाभावाच्च । तथा च उभयाभावप्रतियोगिकुक्षौ स्वव्यापकप्रतिबन्धकतावच्छेदकत्वस्याऽनिवेशे उभयवद्ध्रदे अतिव्याप्तिः । तथाहि-वह्न्यभाववद्ध्रदमात्रावगाहिज्ञानीयायाः वह्न्यभाववद्ध्रदविषयितायाः, वह्न्यभाव-व्याप्यव्याप्यवद्ध्रदकालीनवह्न्यभाववद्ध्रदविषयितायाश्च उभयवद्ध्रदत्वाव-च्छिन्नविषयिताव्यापकजनकतानवच्छेदकतया तच्छून्यत्वाभावेन लक्षणाऽघटकत्वमेव। वह्न्यभाववद्ध्रदकालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितायाः तादृशजनक-तानवच्छेदकत्वाभावेऽपि प्रकृतानुमितिनिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण लक्षणाऽघटकत्वमेव । वह्न्यभावव्याप्यवद्ध्रदो घटकालीनः इत्यादिज्ञानीय-घटादिविषयितायां प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तौ वह्न्यभावव्याप्यवद्ध्रद-त्वावच्छिन्नाऽनिरूपितत्वविरहेण असम्भवस्य वारणाय स्वावच्छिन्नविषयित्वावच्छिन्न-प्रतिबन्धकतासामान्यनिरूपितस्य स्वरूपसम्बन्धरूपावच्छेदकत्वस्य यत्किञ्चिद्विषयि-तायां विवक्षणीयत्वात् । तथा च उभयवद्ध्रदविषयिताया एव लक्षणघटकत्वं, तत्र वह्न्यभाववद्ध्रदविषयितात्वेन रूपेण निरुक्तप्रतिबन्धकतावच्छेदकतायाः; वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितात्वेन रूपेणोभयवद्ध्रदत्वावच्छिन्नविषयिता-व्यापकजनकतावच्छेदकतायाश्चाऽक्षतत्वादिति । स्वव्यापकप्रतिबन्धकतावच्छेदकत्व-दलनिवेशेतु, बाधमात्रावगाहिज्ञानीयवह्न्यभाववद्ध्रदविषयितायाम् उभयवद्ध्रदविषयिता-व्यापकजनकतायाः स्वव्यापकप्रतिबन्धकतावच्छेदकतासम्बन्धविरहेण निरुक्तोभयाभाव-स्याऽक्षततया तस्याः लक्षणघटकत्वात् नातिव्याप्तिः ।

---

1. वह्नित्वेन ह्रदत्वाद्यवगाहिह्रदो वह्न्यभावव्याप्यवान् इत्याकारकनिश्चयीय-विषयितायां वह्न्यभावव्याप्यवद्ध्रदविषयित्वावच्छिन्नप्रतिबन्धकतासामान्या-वच्छेदकीभूतयत्किञ्चिद्विषयितात्मिकायां वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्ना-ऽनिरूपितत्वस्य सत्वेन, असम्भवप्रसंगस्य वारणाय, यत्किञ्चिद्रूपावच्छिन्ननिरूपकता-कविषयितैव यत्किञ्चिद्विषयितापदेन विवक्षणीया ॥

उभयाभावप्रतियोगिकुक्षौ स्वानवच्छेदकत्वस्याऽनिवेशे असम्भवः ।

सर्वत्र सत्प्रतिपक्षविषयितायां तन्निश्चयीयजनकताव्यापकप्रतिबन्धकतावच्छेदकतायाः सत्त्वेन तथाविधविषयित्वाऽप्रसिद्धेः ॥ इत्थं दलद्वयस्य सार्थक्यं घटते । बाधविशिष्टसत्प्रतिपक्षे नातिव्याप्तिः । सत्प्रतिपक्षविशिष्टबाध विषयितायां सत्प्रतिपक्षविषयिताबाधविषयितोभयात्मिकायां वा बाधविशिष्टसत्प्रतिपक्षविषयिताव्यापकजनकताविशिष्टत्वसम्भवात् । तत्र च बाधविशिष्टसत्प्रति पक्षत्वावच्छिन्नाऽनिरूपितत्वस्य अक्षतत्वात् ।

अनुगमे विशेषः । विषयितायां स्ववैशिष्ट्यं न केवलं स्वसमानेत्यादिभेदवत्वसम्बन्धेन । अपि तु स्वसमानेत्यादिभेदवत्वस्वविशिष्टजनकताविशिष्टत्वोभयसम्बन्धेन। तत्र प्रथमः पूर्वोक्त एव । द्वितीये स्ववैशिष्ट्यं स्वसेत्यादिभेदवत्वसम्बन्धेन । तत्र स्वावच्छिन्नविषयिताशाल्यनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन स्वाधिकरणत्वं, स्वरूपसम्बन्धेन भेदप्रतियोगितावच्छेदकत्वं च विवक्षितम् । जनकतावैशिष्ट्यं स्वविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । तत्र स्वविशिष्टत्वं स्वविशिष्टप्रतिबन्धकतावच्छेदकत्वस्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसम्बन्धेन । तत्र प्रथमे स्ववैशिष्ट्यं प्रतिबन्धकतायां स्वसमानेत्यादिभेदवत्वसम्बन्धेन ॥

===============**===============

## ॥ कुल्यायाम् अग्रेतनो ग्रन्थः ॥

१२. न चैवमपि वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्त्वाभाववत् इत्यत्र मूलीक्तोन्नायकेऽतिव्याप्तिः । तत्र यत्किञ्चिद्विषयितापदेन तादात्म्य-सम्बन्धावच्छिन्नत्त्ववदवृत्तित्त्वविषयिताधारणे तस्या उक्तोभयसम्बन्धेन स्वावच्छिन्नविषयकत्त्वव्यापकजनकताविशिष्टज्ञानीयत्त्वात् ।

एवम्, अभावः प्रतियोगितासम्बन्धेन घटत्त्वव्यापकघटत्त्ववद्भेद-कालीनघटत्त्ववानित्यत्र प्रतियोगितासम्बन्धेन घटत्त्वव्यापकघटत्त्व-वद्भेदकालीनघटत्वभावाभाववदवृत्तिमदभावे मूले एवोदासीनत्त्वेना-भिहितेऽति व्याप्तिः । तत्र प्रतियोगितासम्बन्धेन घटत्त्वव्यापकघटत्त्व-वद्भेदकालीनघटत्त्वाभावविषयितायाः उक्तसम्बन्धद्वयेन जनकताविशिष्ट-ज्ञानीयत्त्वादिति वाच्यम् ॥

---

### विवेचनी

१२. तस्या उक्तोभयसम्बन्धेन स्वावच्छिन्नविषयकत्वव्यापकजनकता-विशिष्टज्ञानीयत्वादिति ।

तादात्म्यसम्बन्धावच्छिन्नत्ववद्वृत्तित्वविषयितायां तद्व्यक्तिव्यापकतादात्म्य-सम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत् तद्व्यक्तिमद्वृत्तित्वविषयिताव्यापकजनकतायाः स्वव्यापकप्रतिबन्धकतावच्छेद-कत्वस्वानवच्छेदकत्वोभयसम्बन्धेन वैशिष्ट्यस्य सत्तया तदुभयाभाववत्त्वसम्बन्धेन वैशिष्ट्यस्य विरहेण तस्याः बाधविषयितायाः लक्षणघटकत्वं न सम्भवति । अपि तु बाधघटितोन्नायकविषयितायाः एव । तत्र जनकतानवच्छेदकत्वविरहेण उभयाभावसम्भवात् । तत्र च विषयितायां निरुक्त उन्नायकतावच्छेदकरूपावच्छिन्नाऽनिरूपितत्वस्य विरहेण, यादृशयादृशधर्मपदेन निरुक्तं रूपं धर्तुं न शक्यत इति भावः । एवमग्रेऽपि । मूले एवोदासीनत्वे*नाभिहितेऽतिव्याप्तिरिति ।

नन्वेतदसङ्गतम् । घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाव-वदवृत्तिमदभावनिश्चये, घटत्वव्यापको घटत्ववद्भेदः इति निश्चयविशिष्टघटत्ववांश्च अभाव इति निश्चयत्वावच्छिन्नप्रतिबन्धकतापेक्षया अतिरिक्तायाः तादृशघटत्वाभाव-

व्याप्यवत्ताप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः पूर्वं व्यवस्थापिततया, निरुक्तविशिष्टस्य स्वघटकविशिष्टीयविरोधिताऽतिरिक्तविरोधितावत्त्वेन सत्प्रतिपक्षरूपताया आवश्यकत्वादिति चेत् ।

मैवम् । निरुक्तविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियते (३० कोटि) इत्यादि यथाश्रुतमूलानुसारित्वात् अस्य उदासीनत्वेनाऽभिहितेऽतिव्याप्तिरिति ग्रन्थस्य । तादृशयथाश्रुतमूलात् निरुक्तविशिष्टस्योदासीनत्व प्रतीतेः, तत्रातिव्याप्त्यभिधानसंगतेः।

अत्रेदमवधेयम् । निरुक्तविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियते .. इत्यादि यथाश्रुतमूलस्याऽयमाशयः । घटत्वव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदवृत्तिमान् अभाव इति निश्चये सति प्रकृतानुमित्यनुत्पादस्य निरुक्तनिश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतयैव निर्वाहात् ततोऽतिरिक्तप्रतिबन्धकता तत्र निश्चये न स्वीक्रियते । तथा च तन्निश्चयविषयीभूतविशिष्टस्य स्वघटकविशिष्टीयविरोधिताऽतिरिक्तविरोधिताशून्यत्वेन अलक्ष्यत्वमेवेति ।

इत्थञ्च घटत्वव्यापकघटत्ववद्भेदविषयिताऽनात्मिकायां घटत्ववदभावविषयिताऽनात्मिकायाञ्च तद् विषयितायां स्वरूपसम्बन्धरूपायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायाः विरहेण, प्रकृतलक्षणे स्वावच्छिन्नविषयकत्वे तादृशावच्छेदकतानिवेशेन निरुक्तविशिष्टेऽतिव्याप्तिर्वारणीयेति अस्य ग्रन्थस्याशयः ।

वस्तुतस्तु घटत्वव्यापकेत्यादिविशिष्टविषयकनिश्चये पूर्वोक्तयुक्त्या ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतातोऽतिरिक्तप्रतिबन्धकताया अनिवार्यतया, तद्विषयीभूतस्य घटत्वव्यापकेत्यादिविशिष्टस्य स्वघटकविशिष्टीयविरोधिताऽतिरिक्तविरोधितावत्त्वेन विरोध्यनुमितिजनकतावच्छेदकविषयिताकत्वेन च सत्प्रतिपक्षरूपत्वमावश्यकमेव । एवं सति, तत्र विशिष्टे लक्षणस्याऽगमने प्रदर्शिते (२१ कोटौ) सम्भवन्त्यां चाऽव्याप्तौ, तत्परित्यज्य अन्यत्र विशिष्टे अभाव विशिष्टेत्यादौ लक्षणाऽगमनेनाऽव्याप्तिप्रदर्शनं ग्रन्थकृताम्, उभयाभाव प्रतियोगिकुक्षौ ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितायाः स्वरूपसम्बन्धरूपावच्छेदकतायाः विवक्षणे सति घटत्वव्यापकेत्यादिविशिष्टेऽव्याप्तिर्वार्यते, अभावविशिष्टेत्यादिविशिष्टे तु भवत्येवेत्याशयेनेति तत्रैव व्याख्यायां स्पष्टम् ।

तथा च स्वावच्छिन्नविषयकत्वे प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायाः स्वरूपसम्बन्धरूपाया निवेशस्य उन्नायकातिव्याप्तिवारणानुरोधेनाऽवश्यकत्वेऽपि, नात्र

१३. स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतेत्यत्रानतिरिक्तवृत्तित्ववत् स्वरूपसम्बन्धरूपस्याप्यवच्छेदकत्वस्य निवेशनीयत्वात् ।

तथा चानुगमे विषयितायां स्ववैशिष्ट्यं स्वनिरूपितप्रतिबद्ध्यतानिष्ठाधिकरणतावृत्तित्वसम्बन्धेन । अधिकरणता च स्वसेत्यादिभेदवत्त्वस्वविशिष्टप्रतिबन्धकतानिरूपितत्वोभयसम्बन्धेन ।

प्रतिबन्धकतायां स्ववैशिष्ट्यं स्वसेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं स्वावच्छिन्नविषयितात्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वमवच्छेदकतासम्बन्धेन । अन्यत्सर्वं पूर्ववत् ।

तथा च नोक्तातिव्याप्तिरिति तृतीयनचरीत्या परिष्कारस्य सर्वथा निर्दोषतया तामुपेक्ष्य यथाश्रुतविशिष्टान्तराघटितत्वं निवेश्य बाधघटितसत्प्रतिपक्षेऽव्याप्तिकथनं न युज्यत इति चेत् ।

---

विवेचनी

घटत्वव्यापकेत्यादिविशिष्टे अव्याप्तिप्रसङ्गः । तद्विषयितायां तादृशघटत्वाभावव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायाः प्रसिद्धत्वात्, तस्या एव प्रतिबन्धकताया लक्षणघटकत्वेन तदवच्छेदकीभूतायां घटवव्यापकघटत्ववद्भेदकालीनघटत्वाभावाभाववदभावविषयितायां तद्व्यापकजनकतायाः स्वानवच्छेदकत्वसम्बन्धविरहेण निरुक्तोभयाभाववत्वसम्बन्धस्याऽक्षततया तस्या एव सत्प्रतिपक्षविषयितायाः निरुक्तयत्किञ्चिद्विषयितात्वेन लक्षणघटकत्वसम्भवादिति ।

उक्तसम्बन्धद्वयेन जनकताविशिष्टज्ञानीयत्वादिति ।

निरुक्तोभयाभाववत्तासम्बन्धेन जनकतावैशिष्ट्यविरहादित्यर्थः ॥

१३. विषयितायां स्ववैशिष्ट्यं स्वनिरूपितप्रतिबद्ध्यतानिष्ठाधिकरणतावृत्तित्वसम्बन्धेनेति ।

स्वनिरूपितत्वं अधिकरणतान्वयि । तथा च स्वनिष्ठाधेयता निरूपिताया प्रतिबद्ध्यतानिष्ठाधिकरणता तद्वृत्तित्वमित्यर्थः ।

अधिकरणता चेति । अधिकरणतानिरूपिता स्वनिष्ठाधेयता इत्यर्थः ।

उभयसम्बन्धेनेति । तथा च निरुक्तोभयसम्बन्धावच्छिन्ना या स्वनिष्ठाधेयता तन्निरूपित-

१४. न । एवमपि, वृत्तित्वं निरूपितत्त्वाभाववदित्यत्र तन्निरूपितत्त्व-व्यापकनिरूपितत्त्वव्याप्यसमानाधिकरणतन्निरूपितत्त्ववद्वृत्तित्व-रूपोन्नायकेऽतिव्याप्तिः पविपातायत एव ।

तत्र निरूपितत्त्ववद्वृत्तित्वविषयितायाः उक्तसम्बन्धद्वयेन जनकताविशिष्ट ज्ञानीयत्त्वात् । उन्नायकविषयितायास्तु निरूपितत्त्व-वद्वृत्तित्त्वविषयितात्वेन रूपेण प्रतिबन्धकतानिरूपितस्वरूपसम्बन्ध-रूपावच्छेदकतावत्त्वात् ।

अतः तृतीय न च परिष्काररीतिं परित्यज्य यथाश्रुतमेवानुससार इत्योम् ॥

॥ गुरुवरचरणसरसीरुहोत्थेभ्यो रजःकणेभ्यो नमः ॥

---

विवेचनी

प्रतिबद्ध्यतानिष्ठाधिकरणतावृत्तित्वं सम्बन्ध इत्यर्थः ।

निरुक्तोभयसम्बन्धेन स्वविशिष्टा या प्रतिबद्ध्यता तद्वृत्तित्वं विवक्षणीयमिति फलितम् । निरुक्तोभयान्तर्गते स्वसेत्यादिभेदवत्वसम्बन्धे स्वाधिकरणत्वं स्वावच्छिन्न-विषयिताशालिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगिता वच्छेदकत्वं स्वनिरूपितप्रतिबन्धक-तावत्त्वस्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितेत्यादिजनकतावत्वोभयसम्बन्धेन।

अधिकरणतावृत्तित्वं विषयितायां स्वसमानेत्यादिभेदवत्वसम्बन्धेन । तत्र स्वाधिकरणत्वं स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयिता-शालिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वाश्रयप्रतिबद्ध्यतानिरूपित-प्रतिबन्धकतावत्त्वसम्बन्धेन ।

निरुक्तोभयसम्बन्धेन स्वविशिष्टप्रतिबद्ध्यतावृत्तित्वरूपफलितार्थे तु वृत्तित्वं तेनैव स्वसमानेत्यादिभेदवत्वसम्बन्धेन । तत्र भेदप्रतियोगि तावच्छेदकत्वं तु स्वनिरूपित-प्रतिबन्धकतावत्त्वसम्बन्धेन । स्ववैशिष्ट्यं प्रतिबध्यतायां निरुक्तोभयसम्बन्धेन । स्वविशिष्ट प्रतिबन्धकताविशिष्टत्वसम्बन्धस्य प्रवेशनात्अनुपदोक्तोन्नायकाऽतिव्याप्ति-र्वार्यत इति फलितम् ।

इति सत्प्रतिपक्षशतकोटिकुल्ययोर्विवेचनी समाप्तिमगमत् ॥

*************************

